# Siva Gita

with the Commentary of

PARAMASIVENDRA SARASWATI

(THE PRECEPTOR OF SADASIVA BRAHMAN.)





PART I.

Adhyayas I—III.



SRIRANGAM:

SRI VANI VILAS PRESS.

1906.




॥ ॐ ॥

# ॥ शिवगीता ॥

श्रीमत्परमहंसपरिव्राजकाचार्याभिनवनारायणेन्द्रसरस्वतीपूज्यपाद-
शिष्य श्रीमत्परमशिवेन्द्रसरस्वतीविरचितया शिवगीता-
तात्पर्यप्रकाशिकाख्यया व्याख्ययासहिता ।



श्रीरङ्गनगरे
श्रीवाणीविलास मुद्रायन्त्रालये
संमुद्रिता ।
१९०६.



॥ श्रीगणेशाय नमः ॥

# ॥ श्रीशिवगीता ॥



## प्रथमोऽध्यायः ।

उमापत्यमुमाजानिमुमांचोमासहोदरम् ।
पद्मामुमाननन्दारं विधिं वयमुपास्महे ॥
पञ्चाक्षरतनुं पञ्चवदनं प्रणवं शिवम् ।
अपारकरुणारूपं गुरुमूर्तिमहं भजे ॥
नत्वा सर्वगुरुं सांबं लीलामानुपविग्रहम् ।
रामञ्च शिवगीतायाः तात्पर्यं वर्ण्यते मया ॥
क्वेयं गीता शिवप्रोक्ता गंभीरोपनिषन्मयी ।
क्वाहं मन्दमतिर्हन्त शंभोराज्ञा गरीयसी ॥

इह खलु देवाः रावणादिरक्षःपीडिताः तत्परिचरणादिना मानभङ्गयुक्ताः तैरेव विघ्नितभूदेवादिकर्तृकयज्ञानुष्ठानेन बलहीनाश्च सन्तः वैकुण्ठवासिनं भगवन्तं दुष्टनिग्रहशिष्टपरिपालनपरायणं नारायणमुपेत्य रावणादिनिग्रहं प्रार्थितवन्तः । स च तानपि सहायत्वेन वानरादिरूपेण प्रेरयित्वा स्वयं किञ्चित्परिवारसहितस्सन् रघुकुले रामादिरूपेण प्रादुर्बभूव । उक्तञ्च भगवता– ( परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ) इति । प्रादुर्भवानन्तरमयोद्ध्यादि प्रदेशे बालादिलीलामनुभूय पितुर्दशरथस्य नियोगात् क्रमेण दण्डकारण्यं प्रविष्टः मारीचेन वञ्चितो रावणेनापहृतसीतः अतिदुःखितोऽगस्त्येन प्रतिबोधितोपायो गोदावरीतीरे कृतशिवाराधनः शिवप्रादुर्भावेन सन्तुष्टः पाशुपतास्त्रादिकं लब्ध्वा रावणसंहारे कृतनिश्चयः लोकानुग्रहार्थं ज्ञानं तत्साधनानि जीवादिस्वरूपं च शिवं पृष्टवान् । श्रीशिवेनापि तस्मै सर्वमुपदिष्टं । तामेतां शिवेन प्रोक्तां श्रीरामेण श्रुतामुपनिषन्मयीं पठनादिमात्रेण ब्रह्मविद्याप्रदात्रीं 'शिवगीता' मवतारयितुमुपक्रमते । अथेत्यादिनाध्यायचतुष्टयेन । एवञ्चाद्ध्यायचतुष्टयस्य तदवतारणग्रन्थरूपत्वात् शिवगीतात्वं । धर्म-

क्षेत्र इत्यादेरिव भगवद्गीतात्वं । अत्राद्येऽद्ध्याये सकलवेदान्तार्थसंग्रहः केवलं सूतवक्तृकः । तदनन्तरमेतस्यैवार्थस्याद्ध्यायद्वयेन प्रपञ्चोऽगस्त्यवक्तृकः सूतानुवादरूपः । चतुर्थाध्यायस्तु अगस्त्योपदेशानन्तरं शिवलिङ्गप्रतिष्ठापनपूर्वकं श्रीरामकृतशिवार्चनाद्यनुष्ठानप्रकाशकः । सूतवक्तृक एव । अनन्तरमध्यायद्वादशकेन उक्तस्यैव वेदान्तार्थस्य विस्तरेण प्रपञ्चः । शिवराघवसंवादरूपः सूतानुवादः ।

सूत उवाच—

अथातस्संप्रवक्ष्यामि शुद्धं कैवल्यमुक्तिदं ।
अनुग्रहान्महेशस्य भवदुःखस्य भेषजं ॥ १ ॥

यद्यप्यथशब्दो गीतारंभे श्रुत्या मङ्गलप्रयोजनो भवति । उक्तं च— (ओङ्कारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्वा विनिर्यातौ तस्मान्मांगलिकावुभाविति ।) तथापि पूर्वोक्तधर्मोक्त्यानन्तर्यार्थकः अतश्शब्दः कृपीणां ज्ञानेऽधिकारसूचनार्थः । सम्यक् प्रकर्षेण वक्ष्यामि शुद्धं प्रतिबन्धरहितं ज्ञानमित्यध्याहारः ज्ञानं कीदृशमित्यत आह । (कैवल्यमुक्तिदमिति) कैवल्यं प्रत्यगभिन्नब्रह्मस्वरूपं तत् स्वरूपं मुक्तिः तत् प्रदं तदभिव्यञ्जकं तत्वमस्यादिवाक्यजन्यनिर्विचिकित्साखण्डाकारवृत्तिरूपं भवदुःखस्य भेषजं सद्यो मुक्तिकरं महेशस्यानुग्रहात् संप्रवक्ष्यामीति सम्बन्धः । अनुग्रहादिति सूतस्य ज्ञानप्रदानसामर्थ्यं सूचितं । उक्तञ्च— (ईश्वरानुग्रहादेव पुंसामद्वैतवासना । महाभयपरित्राणाद्विप्राणामेव जायत इति ।) यद्वा महेशस्य अनुग्रहात् ज्ञानं भवति तद्ज्ञानं संप्रवक्ष्यामीति योजना । तदुक्तं ज्ञानम्महेश्वरादिच्छेदिति । उक्तं च वार्तिककारेण— (श्रुत्याचार्यप्रसादेन योगाभ्यासबलेन च । ईश्वरानुग्रहेणापि स्वात्मबोधोदयो भवेत् ॥) ननु, (कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।) "अपामसोमममृता अभूम । हिरण्यदा अमृतत्वं भजन्ते । सत्येन लभ्यस्तपसा ह्येष आत्मा" इति वचनात् । कर्मादीनां मोक्षहेतुत्वं प्रतीयते । तत आह— १.

न कर्मणामनुष्ठानैः नदानैस्तपसापि वा ।
कैवल्यं लभते मर्त्यः किन्तु ज्ञानेन केवलम् ॥ २ ॥

अयमाशयः कर्मणैव हीति स्मृतौ संसिद्धिशब्देन चित्तशुद्धिरेव विवक्ष्यते अपामसोममित्यादिश्रुतौ आपेक्षिकममृतत्वं सत्येन लभ्यत इति श्रुतौ च तपसो ज्ञानाङ्गत्वमेव सम्यक्ज्ञानेनेति वाक्यशेषात् "तमेव विदित्वा अतिमृत्युमेति । नान्यः पन्था

अयनाय विद्यत '' इति श्रुतेश्च । किञ्च ' तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन ' इति श्रुत्या यज्ञादीनां विविदिषायामेवोपयोगदर्शनात् । ननु ज्ञानस्य मोक्षहेतुत्वं न वारयामः । किंतु कर्मसहितस्य कर्माङ्गस्य वा तस्य मोक्षहेतुत्वं ब्रूम इत्यत आह । किंतु ज्ञानेनेति तुशब्दः पक्षव्यावृत्यर्थः केवलेन ज्ञानेन मोक्ष इत्यर्थः । तदुक्तं सूतसंहितायां । ( कर्मशेषत्वमायासात् ब्रह्मकाण्डस्य केचन । वर्णयन्ति न ते सन्तः किन्तु ते विप्रलंभकाः ॥ कर्तृत्वं चैव भोक्तृत्वं नियोक्तृत्वं क्रियाफलम् । ग्रसते ब्रह्मविज्ञानं ततस्तच्छेषतास्य न ॥ कर्मप्रकरणस्थं हि ज्ञानं कर्माङ्गमिष्यते । भिन्नप्रकरणं ज्ञानं ततस्तच्छेषतास्य न ॥ कर्मसाद्ध्यफलं ब्रह्मज्ञानसिद्धफलं बुधाः । तथा सति मुनिश्रेष्ठाः तच्छेषत्वं कथं भवेत् । आधिकारिकभेदेन प्रवृत्तं मुनिपुङ्गवाः । काण्डद्वयमतोऽन्यस्य कथमन्यद्गुणो भवेत् ॥ कर्माज्ञानस्य सद्भावे न तथा ब्रह्मवेदनं । तथा सति कथं विप्राः ज्ञानकर्मसमुच्चयः ॥ अप्रकाशात्मकं कर्म स्वप्रकाशस्तु वेदनं । तथा सति कथं विप्राः ज्ञानकर्मसमुच्चयः ॥ असमुच्चय इति ।) उक्तं च भाष्ये फलजिज्ञास्यभेदाच्च अभ्युदयफलं धर्मज्ञानं तच्चानुष्ठानापेक्षं निश्श्रेयसफलं तु ब्रह्मज्ञानं न चानुष्ठानान्तरापेक्षं भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति पुरुषव्यापारतन्त्रत्वात् इह तु भूतं ब्रह्मजिज्ञास्यं नित्यं निवृत्तत्वात् न पुरुषव्यापारतन्त्रं । उक्तं च नैष्कर्म्यसिद्धौ-(अज्ञानहानमात्रत्वात् मुक्तेः कर्म न साधनं । कर्मापमार्ष्टि नाज्ञानं तमसीवोत्थितं तम ॥ इति ।) (वेदावसानवाक्योत्थसम्यग्ज्ञानाशुशुक्षणिः । दादहत्यात्मनो मोहं न कर्मा प्रतिकूलत ॥ इति ।) (अयथावस्त्वविद्यास्याद्विद्या तस्या विरोधिनी । समुच्चयः ततो नैव रविशार्वरयोरिव ॥ अज्ञानमनिराकुर्वन् ज्ञानमेव न सिद्ध्यति । विपन्नकारणग्रामं ज्ञानं कर्म न ढौकते ॥ हेतुस्वरूपकार्याणि प्रकाशतमसोरिव । विरोधिनि ततो नास्ति सांगत्यं ज्ञानकर्मणोः ॥ सकृत् प्रवृत्या मृद्गाति क्रियाकारकरूपभृत् । अज्ञानमागमज्ञानं सांगत्यं नास्त्यतोऽनयोः ॥ मोहापिधानभंगाय नैव कर्म न कारणं । ज्ञानेनैव फलं व्याप्तेः तत्र कर्म निरर्थकमिति । )(कर्माज्ञानसमुत्थत्वात् नालं मोहापनुत्तये । सम्यग्ज्ञानं विरोध्यस्य तामिस्रस्यांशुमानिवेति । ) समप्रधानयोरप्यसंभव एव ( साध्यसाधकभावाच्च पञ्चास्योरभ्रयोरिव । एकदेशानवस्थानां न समुच्चयता तयोरिति । ) सुखावबोधार्थमाख्यायिकामाह- २.

रामाय दण्डकारण्ये पार्वतीपतिना पुरा ।
या प्रोक्ता शिवगीताख्या गुह्याद्गुह्यतमा हि सा ॥ ३ ॥

गुह्याद्गुह्यतमा गुह्यं रहस्यं कर्मस्वरूपं उपासनास्वरूपं गुह्यतरं ज्ञानं गुह्यतमं तत्परत्वादियं गुह्यतमा ॥ ३.

यस्याः श्रवणमात्रेण नृणाम्मुक्तिः ध्रुवा भवेत् ।
पुरा सनत्कुमाराय स्कन्देनाभिहिता हि सा ॥ ४ ॥

मुक्तिः मुक्तिसाधनं ज्ञानमित्यर्थः ज्ञानप्रतिबन्धनिवृत्यर्थं स्मरणीयां गुरुपरंपरामाह पुरेति ॥ ४.

सनत्कुमारः प्रोवाच व्यासाय मुनिसत्तम ।
मह्यं कृपातिरेकेण प्रददौ वादरायणः ॥ ५ ॥

प्रोवाच तामिति शेषः प्रददौ अत्रापि तामितिसंबन्धः ॥ ५.

उक्तं च तेन कस्मैचिन्नदातव्यमिदं त्वया ।
सूतपुत्रान्यथा देवाः क्षुभ्यन्ति च शपन्ति च ॥ ६ ॥

इदं गीताप्रतिपाद्यं ज्ञानं कस्मैचिन्मनुष्याय सामान्याय अन्यथा साधारण्येन उपदेशे शपन्ति च इति शेषः अस्य चोक्तमित्यनेनान्वयः ॥ ६.

अथ पृष्टो मया विप्राः भगवान्वादरायणः ।
भगवन् देवतास्सर्वाः किं क्षुभ्यन्ति शपन्ति च ॥ ७ ॥

किं क्षुभ्यन्ति किमर्थं क्षुभ्यन्तीत्यर्थः ॥ ७.

तासामत्रास्ति का हानिः यथा कुप्यन्ति देवताः ।
पाराशर्योथ मामाह यत् पृष्टं शृणु वत्स तत् ॥ ८ ॥

देवता इत्यनन्तरं इति शब्दाद्ध्याहारः । तस्य च पृष्ट इति संबन्धः ॥ ८.

नित्याग्निहोत्रिणो विप्राः सन्ति ये गृहमेधिनः ।
त एव सर्वफलदाः सुराणां कामधेनवः ॥ ९ ॥

कामधेनवः कामधेनुवत् सर्वफलदा इत्यर्थः ॥ ९.

भक्ष्यं भोज्यं च पेयं च यद्यदिष्टं सुपर्वणाम् ।
अग्नौ हुतेन हविषा तत्सर्वं लभ्यते दिवि ॥ १० ॥

चकारद्वयेन लेह्यचोष्ये संगृहीते वेदितव्ये । ननु दिव्यामृतस्य सर्वरसातिशायिनो विद्यमानत्वात् हविराद्यभावेऽपि न हानिरत आह ॥ १० ॥

नान्यदस्ति सुरेशानामिष्टसिद्धिप्रदा दिवि ।
दोग्ध्री धेनुर्यथा नीता दुःखदा गृहमेधिनाम् ॥ ११ ॥

अयं भावः अमृतस्य साधारणान्नस्य विद्यमानत्वे विशेषान्नरूपेण तत्तद्देवताभीष्टप्रदत्वादिति । उक्तं च— यावदेका देवता कामयते यावदेका तावदाहुतिः प्रथते न हि तदस्ति यत्तावदेव स्यात् यावज्जुहोतीति । नीता राजादिभिरपहृता दार्ष्टांतिकमाह ॥ ११॥

तथैव ज्ञानवान् विप्रः देवानां दुःखदो भवेत् ।
त्रिदशास्तेन विघ्नन्ति प्रविष्टा हृदयं नृणाम् ॥ १२ ॥

ननु, विप्रस्य ज्ञानवत्वेऽपि विद्यमानत्वात्तस्य कर्मानुष्ठानसंभवाच्च कथं देवान्प्रति दुःखप्रदत्वमिति चेत्सत्यं । ज्ञानवतोऽपि विप्रस्य विद्यमानत्वेऽपि अधिकारभूतब्राह्मण्याद्यभिमानाभावेन नियोज्यत्वनिवृत्तेः । तथा च ज्ञानवति विप्रे देवान्प्रतिस्वत्वं निवर्तते तेन स्वापहरणदुःखेन विघ्नन्ति ज्ञानोत्पत्ति प्रतीति शेषः । तदुक्तमनुभूतिप्रकाशे ( स्वस्माद्भिन्ना देवतेति धीरविद्याविजृम्भिता । स्वस्य तत्वमविज्ञाय यागदानादिकर्मभिः ॥ स्वतोऽन्या देवताः पाति ह्यनड्वान्यणिजं यथा । अपि भूरिवसोः पुंस एकस्मिन्नपि तस्करैः ॥ ह्रियमाणे महद्दुःखं किमु सर्वापहारतः । सर्वस्वतुल्ये नृपशौ ब्रह्मधीपरिमोपिणा ॥ ह्रियमाणे महद्दुःखं स्यात् सर्वेषां दिवौकसां । तस्माद्देवान्न प्रियन्तद्यन्मनुष्या विजानते ॥ ब्रह्मात्मत्वमतो देवाः प्रतिबध्नन्ति वेदनं । ) ननु विघ्नन्तीत्युक्तं केन प्रकारेण विघ्नन्तीत्यत आह प्रविष्टं हृदयमिति आचार्यस्य बुद्धिक्षोभं शिष्यस्य ज्ञाने अविश्वासकुतर्कत्वादिकं संपाद्य विघ्नं कुर्वन्तीत्यर्थः । तदुक्तमनुभूतिप्रकाशे । ( हविर्भुजोस्य देवानां अप्रियम्मर्त्यवेदनं । मर्त्यास्तत्व न जानन्ति विघ्नैः देवकृतैर्हताः ॥ आचार्यशिष्ययोर्दोषान् देवा उत्पादयन्ति हि । वाग्दोषात् बुद्धिदोषाद्वा वक्तुं शक्नोति नो गुरुः । अविश्वासात् कुतर्काद्वा शिष्यो बोद्धुं न शक्नुयात् ॥ ) इति । ननु देवदेवस्य शिवस्य भजनद्वारा तदनुग्रहात् देवकृतविघ्ननिरासो भविष्यतीत्यत आह ॥  १२.

ततो न जायते भक्तिः शिवे कस्यापि देहिनः ।
तस्माद्विविदिषा नैव जायते शूलपाणिनः ॥ १३ ॥

ततः राजसाद्युद्रेकलक्षणचित्तदोषादित्यर्थः । भक्तिस्वरूपन्तूत्तरत्र निरूपयिष्यते तस्मात्

शिवभक्त्यभावात् विविदिषा ज्ञानेच्छा प्रवृत्तिपर्यन्ता किं विषयिणी विविदिषेत्यत आह शूलपाणिन इति शूलं पाणौ यस्य तच्छूलपाणि सगुणं ब्रह्मोच्यते लक्षणया निर्गुणं परशिवस्वरूपं प्रतिपाद्यते । ननु भक्त्यभावेऽपि विविदिषा दृश्यते अत आह । १३.

यथाकथञ्चिज्जातापि मध्ये विच्छिद्यते नृणाम् ।
जातं वापि शिवज्ञानं न विश्वास्यं भवत्यलम् ॥ १४ ॥

जाता विविदिषेत्यनुषंगः । ननु केषांचित् वेदान्तशास्त्राभ्यासिनां मध्ये विविदिषा विच्छित्तिर्न दृश्यते तदभ्यासप्रकर्षे च ज्ञानमपि जायते अत आह जातमिति विश्वास्यं विश्वसनीयं अविद्यानिवर्तनक्षमं सर्वात्मत्वाविर्भावरूपमित्यर्थः तदुक्तं श्रुत्या श्रवणायापि बहुभिः यो न लभ्यः शृण्वन्तोपि बहवोयं न विद्युरिति । अस्या श्रुत्या अभिप्रायो वर्णितोऽनुभूतिप्रकाशे चार्वाकैः कर्मिभिश्चात्मा श्रवणायापि दुर्लभः । मुमुक्षवोऽपि बहवः शृण्वन्तोऽपि न जानते । किञ्च तत्रैव राज्ञा कृषिफलं यद्वत् करार्थं प्रतिबद्ध्यते । सर्वभावस्तथा देवैः यागभुग्भिः निवार्यते । उक्तञ्च भगवता । (मनुष्याणां सहस्रेषु कश्चित् यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वतः) इति ऋषयः ज्ञाने नैराश्यात् पृच्छन्ति ऋषय इति केन हेतुना नैराश्यमित्यत आह ॥ १४.

ऋषयः—

यदैव देवताविघ्नमाचरन्ति तनूभृताम् ।
पौरुषं तत्र कस्यास्ति तेन मुक्तिर्दवीयसी ॥ १५ ॥

तनूभृतां केवलशरीरिणां ज्ञानशून्यानामित्यर्थः पौरुषं पुरुषयत्नः कस्य न कस्यापीत्यर्थः । तेन ज्ञानेन यत्नाभावेन मुक्तिर्दवीयसी दूरतरा । ननु सर्वात्मना ज्ञानोपायाभावेऽपि ज्ञानोपायोपदेशे कथं सूतः प्रवर्तत इति पर्यालोच्य सन्दिहानाः पृच्छन्ति सत्यमित्यर्द्धेन ॥ १५.

सत्यं सूतात्मज ब्रूहि तत्रोपायोऽस्ति वा न वा ।

सत्यं यथार्थवचनं उत्तरमस्तीति वक्तुमाह सूत इति उपायमाह ।

सूतः—

कोटिजन्मार्जितैः पुण्यैः शिवे भक्तिः प्रजायते ॥ १६ ॥

असंख्यातजन्मकृतैः काम्यादिकर्मजन्यापूर्वैः भक्तिः शिवो भजनीय इति विश्वासः ननु शिवस्सेवनीय इति विश्वासात् किं भवति अत आह ॥ १६.

इष्टापूर्तादि कर्माणि तेनाचरति मानवः ।
शिवार्पणधिया कामान् परित्यज्य यथाविधि ॥ १७ ॥

आदिशब्देन दत्तादिकमुच्यते । उक्तं च तत्वदीपने । (अग्निहोत्रं तपस्सत्यं वेदानां चानुपालनं । आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ॥ वापीकूपतटाकादि देवतायतनानि च । अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥ शरणागतसंत्राणं भूतानां चाप्यहिंसनं । बहिर्वेदि च यद्दानं दत्तमित्यभिधीयत इति । ) तेन शिवोऽस्मात्रक्षतीति विश्वासेन कामान् फलानि परित्यज्य अनभिसन्धाय शिवार्पणधिया तेन परमेश्वरं प्रीणयानीति संकल्पलक्षणया यथाविधि आचरतीत्यन्वयः । एवंविधानुष्ठानस्य फलमाह ॥ १७.

अनुग्रहस्तेन शम्भोः सुदृढो जायते नराः ।
ततो भीताः पलायन्ते विघ्नान् हित्वा सुरेश्वराः ॥ १८ ॥

तेन ईश्वरार्पणधियासंगकर्मानुष्ठानेन सुदृढोऽनुग्रहः अस्मात् संसारात् अयं मोक्षयितव्य इति कारुण्यविशेषः अनुग्रहमात्रं तु तत्तत् कर्मणां फलदानार्थं प्रीतिमात्रं नरा इति ऋषीणां संबोधनं । दृढानुग्रहेण वा किं भवतीत्याह तत इति अनुग्रहविशेषात् सुरेश्वराः लोकपालादयः विघ्नाकरणे फलमाह । १८.

जायते तेन शुश्रूषा चरिते चन्द्रमौळिनः ।
शृण्वतो जायते ज्ञानं ज्ञानादेव विमुच्यते ॥ १९ ॥

तेन विघ्नाकरणेन चन्द्रमौळिन इति कर्मणि षष्ठी चन्द्रमौळेः परशिवस्य चरिते व्यापारे परशिवकर्मकश्रवणमननादिजन्यसाक्षात्काराय गुरूपसर्पणद्वारा वेदान्तमीमांसाश्रवणेच्छा शुश्रूषा जायत इत्यन्वयः । इच्छानन्तरं वेदान्तवाक्यार्थविचारं कृतवतः ज्ञानं निर्विचिकित्सापरोक्षप्रत्यगभिन्नब्रह्मज्ञानरूपं जायते । येन केन प्रकारेण ज्ञानार्थं शिवानुग्रहफला शिवभक्तिरेव संपादनीयेत्याह ॥ १९.

बहुनात्र किमुक्तेन यस्य भक्तिश्शिवे दृढा ।
महापापोपपापौघकोटिग्रस्तोऽपि मुच्यते ॥ २० ॥

दृढभक्तिर्नाम परमेश्वरे प्रेमातिशयरूपः अनेकजन्मकृतसुकृतपरिपाकः तदपदान-

श्रवणस्मरणादौ मनोवाङ्नेत्रगात्रेषु हर्षगद्गदस्वरानन्दबाष्परोमाञ्चकंचुकादिसंपादकः परमेश्वरप्रणिधानस्तोत्रमन्त्रादिजपालयादिदर्शनलिंगादिपूजाप्रवृत्तिकरः मनोवृत्तिविशेषः पत्याविव प्रोषितनाथायाः सत्याः। उक्तं चांबास्तवे। (आविर्भवत्पुलकसहतिभिश्शरीरैः निष्यन्दमानसलिलैः नयनैश्च नित्यं। वाग्भिश्च गद्गदपदाभिरुपासते ये पादौ तवांब भुवनेषु त एव धन्या इति।) भक्तिपरिपाकानुग्रहरूपः प्रसादः सूतसंहितायामप्युक्तः (प्रहर्षस्वरनेत्रांगविक्रियाकंपनं तथा। स्तोभश्शरीरपातश्च भ्रमणं चोद्गतिस्तथा॥ आकाशे च स्थितिर्देवाः शरीरान्तरसंस्थितिः। अदर्शनं च देहस्य प्रकाशत्वेन भासनं॥ अनधीतस्य शास्त्रस्य स्वत एव प्रकाशनं। निग्रहानुग्रहे शक्तिः पर्वतादेस्तु भेदनं। एवमादीनि लिंगानि प्रसादस्य सुरर्षभा॥ इति।) तत्रैवान्यत्रापि प्रकारभेदो वर्णितः। (भक्तिर्बहुविधा ज्ञेया भवानीसहितस्य तु। एका शंकरसायुज्यश्रद्धा सारतरा परा॥ अन्या शिवस्य सारूप्यश्रद्धार्तीव शिवप्रिया। अपरा शिवसामीप्यश्रद्धा श्रेष्ठा द्विजोत्तमाः॥ इतरा शिवसालोक्यश्रद्धाभीष्टफलप्रदा। अन्या देवेश्वरज्ञानश्रद्धा पाशनिकृन्तनी॥ अन्या वेदशिरश्रद्धा साक्षाद्विज्ञानदायिनी। अपरा श्रवणश्रद्धा प्रोक्ता वेदान्तवेदिभिः। इतरा मननश्रद्धा नृणां संभावना प्रदा। अन्या देवेश्वरध्यानश्रद्धारूपा महत्तरा। शिवलिङ्गार्चनश्रद्धा द्विजा भक्तिरनुत्तमा। लिङ्गार्चनदिदृक्षा च महाभक्तिः प्रकीर्तिता। अनुमोदनमीशस्य पूजाया भक्तिरुच्यते। पूजोपकरणश्रद्धा चापि भक्तिरुदीर्यते। शिवोत्सवदिदृक्षा च शिवभक्तिर्महत्तरा॥ इति। महादेवापदानानां श्रवणेच्छा महर्षयः। महाभक्तिरिति प्रोक्ता शिवभक्तिपरायणैः। कथाश्रवणकालेषु शिवस्य परमात्मनः। विकारस्वरनेत्रादेः भक्तिरुक्ता महात्मभिः॥) इति। (शिवाराधनबुद्ध्यैव नित्यानामपि कर्मणां। नैमित्तिकानां करणमपि भक्तिश्शिवस्य तु॥ अभ्यासश्शिवविद्यायाः तस्या अध्यापनं तथा। शिवभक्तिरिति प्रोक्ता शिवधर्मपरायणैः॥ शिवज्ञानैकनिष्ठस्य शुश्रूषा श्रद्धया सह। शिवभक्तिरिति प्रोक्ता महामोहैर्भरर्जनैः॥) इति च। शिवपुराणेऽपि भक्तिरनेकविधा दर्शिता। (मद्भक्तजनवात्सल्यं पूजायां चानुमोदनं। स्वयमभ्यर्चनं भक्त्या मदर्थे चांगचेष्टनं॥ मत्कथाश्रवणं भक्तिस्वरनेत्रांगविक्रिया। मन्नामकीर्तनं नित्यं यच्च माश्चोपजीवति) इति। भक्तिसंपादनीयेत्युक्तं। तस्याः किं प्रयोजनमित्यत आह महापापेति। महापापोपपापानामोघाः समूहाः तेषां कोटयः ताभिः ग्रस्तोऽपि आक्रान्तोऽपि ताभ्यः पापकोटिभ्यः ज्ञानद्वारा संसाराच्च मुच्यते मुक्तो भवतीत्यर्थः अत्रोपात्तपापद्वयेन इतराण्यपि पापान्युपलक्ष्यन्ते। तथा हि सूतसंहितायां दशविधपापान्युक्तानि। (पातकानि समासेन दश प्रोक्तानि सूरिभिः। तारतम्यक्रमेणैव तेषामस्त्येव लाघवम्॥ प्रथमं पातकं प्रोक्तं महापातकसंज्ञितं। द्वितीयमतिपाताख्यं ततः प्रासंगिकाभिधं॥ चतुर्थं पातकं प्रोक्तं पञ्चमञ्चोपपातकम्। जाति

भ्रंशकरं षष्ठं संकीर्णकरण तथा ॥ न पात्रीकरणं पश्चात् नवमं तु मलावह । प्रकीर्णकसमाख्यं तु दशमं पातकं द्विजाः ॥ प्रतिपिद्धसुरापानं ब्रह्महत्या तथैव च । ब्राह्मणानां सुवर्णस्य हरणं मुनिपुंगवाः । जननीगमनं चैव संयोगश्चैव तैस्सह । महान्ति पातकान्याहुः मुनयः सूक्ष्मदर्शिनः । असाक्षान्मातृगमनं स्वपुत्रीगमनं तथा । स्नुषाया गमनं तद्वत् भगिनीगमनं तथा ॥ मातुलानीं स्नुषाश्वश्रूगमनं च तथैव च । त्रिपुण्ड्रधारणाभावः भूत्यानुद्धूलनं तथा । ) इत्यादीन्यतिपातकानि । ( पृथिवीहरणन्तद्वत् पितृव्यस्य तथैव च । मातामहस्य विप्रेन्द्रा मातुलस्य नृपस्य च । भार्याया गमनं तद्वत् प्राहुः प्रासंगिकं बुधाः । स्वमातुस्सोदरायास्तु गमनं तद्वदेव तु । पितृष्वसुर्मातृसख्या दुहितुर्गमनं तथा । ) इत्यादीनि पातकानि । (मातापित्रोः स्वसुश्चैव गमनं श्रोत्रियस्य च । ऋत्विजोऽध्यापकस्यापि मित्रस्य च तथैव च । एवमादीनि मुख्योपपातकानि । (असत्यभाषणं तद्वत् पैशुनं राजगामि च । गुरोश्चालिकनिर्बन्धं वेदनिन्दा तथैवच । इत्यादीनि गौणोपपातकानि । ( विप्राणां रोगकारित्वमघ्रेयघ्रातिमेव च । सुराघ्राति तथा जैह्म पशौ पुंसि च मैथुनम् । जातिभ्रंशकरं प्राहुः धार्मिका वेदपारगाः । ग्राम्यारण्यपशूनान्तु हिंसनम् मुनिपुङ्गवाः । संकीर्णकरणं प्राहुः सर्वशास्त्रविशारदाः । निन्दितेभ्यो धनादानमन्नादानं तथैव च । कुत्सितं जीवनञ्चैव वाणिज्यमनृतोक्तिता । एवमादीन्यपात्रीकरणानि । ( पक्षिणां घातनञ्चैव जलस्थलनिवासिनाम् । मद्यपस्पृष्टभुक्तञ्च प्राहुस्सन्तो मलावहम् । अनुक्तानि समस्तानि प्रकीर्णकसमाह्वयम् । ) आदराभावादिना चण्डालादिभिः क्रियमाणप्रदक्षिणनमस्कारादिरूपा शिवभक्तिर्मुक्तिदेत्याह । (अनादरेण शाठ्येन परिहासेन मायया । शिवभक्तिरतश्चेत्स्यात् अन्त्यजोऽपि विमुच्यते । अनादरेणाश्रद्धया शाठ्येन परदाराभिमर्शनपरद्रव्यापहाराद्यभिप्रायेण मायया वञ्चनया । उक्तं च ब्रह्मकैवर्ते । (शाठ्येन वा डम्भविलोभतो वा प्रसङ्गतो वाऽपि यदृच्छया वा । ईशं नमन्तः न यमं व्रजन्ति पञ्चाक्षरेणार्च्य भवन्ति मुक्ताः । चण्डालश्वपचोऽथवापि पतितो गोघ्नः कृतघ्नोऽपि वा लिङ्गे शंकरमर्चयन् सकृदपि स्वान्ते शिवं भावयन् । मुक्तः पातककोटिभिः जलधरैः मुक्तार्कवद्भ्राजते सत्यं सत्यमिदं पुनः पुनरहो वक्ष्येऽनवद्येतव ॥ दोषैर्महापातकिनोऽपि मुक्ताः भवेयुरीशार्चनयानवद्ये । भिषक्कृया रोगिण आशु रोगैरिव प्रसन्ने किमसाध्यमीशे । पापाधिकः पापतरोऽपि पापैः जलैर्युतोवापि नरोनवद्ये । न लिप्यतेघैरिव वारिजस्य तोयैश्छदः शङ्करपूजकश्चेत् । यो मातृहा वा पितृहा पशुघ्नो भ्रूणस्य वीरस्य गुरोश्च हन्ता । अमन्त्रकं वापि महेशलिंगं स्पृष्ट्वानवद्ये स भजेद्विशुद्धिम् ॥ अनेकजन्मार्जितपापराशिः संदर्शनेन त्रिपुरान्तकस्य । क्षिप्रं विनश्य-

त्यनलेन तूलं दहेद्यथा चित्रमहोनवद्ये । बालघ्नः पितृहापि गोवधरतः स्त्रीशूद्रहा मातृहा वक्ता वा परदोषदुष्टवचसो रत्नापहारी नरः ॥ देवस्वस्य परस्य वा पशुधनस्तेयी च हर्तापि वा दृष्ट्वा लिंगमुमापतेश्च सहसा पूतोनवद्यो भवेत् ॥) इयं भक्तिर्मनुष्यमात्रस्यातिसुलभेति सानुक्रोशमाह सार्धेन ॥ २०.

एवं भक्तिश्च सर्वेषां सर्वदा सर्वतोमुखी ।
तस्यां तु विद्यमानायां यस्तु मर्त्यो न मुच्यते ॥ २१ ॥
संसारबन्धनात्तस्मादन्यः कोवापि मूढधीः ।

सर्वेषां स्त्रीशूद्रप्रभृतीनां एवं वक्ष्यमाणा प्रदक्षिणादिरूपा भक्तिः सर्वदा अहोरात्रं यस्य येन प्रकारेणापि पूजां कर्तुं रोचते । तद्रूपा तस्यामतिसुलभायां न मुच्यते । पापनिवृत्तिद्वारा ज्ञानं प्राप्य न मुक्तो भवति संसारबन्धनादविद्यातत्कार्यक्लेशादिरूपात् तस्मात्सुलभशिवभक्तिरहितात् एवमनियमेन शिवभक्तिं कृतवतोऽपि मुक्तिरुक्ता इदानीं भ्रान्त्या द्रोहरूपामविक्रियां नियमेन कृतां पूजामनन्यमानसस्यापि मुक्तिरस्तीत्याह ॥ २१.

नियमाद्यस्तु कुर्वीत भक्तिं वा द्रोहमेव वा ॥ २२ ॥
तस्यापि च प्रसन्नोऽसौ फलं यच्छति वाञ्छितम् ।

भक्तिविरहितशिवार्चनादि वा द्रोहमेव वा प्रतिविद्धगण्डूषजलाभिषेकशवभस्म निवेदनादिरूपां क्रियामेवेत्यर्थः । तस्यापि निन्दितक्रियां कुर्वतोऽपि फलं भुक्तिमुक्तिरूपं यच्छति । ददाति नियमेन शिवभक्तिकरणे द्रव्यसंपादनप्रयासोऽपि स्वल्प इत्याह ॥ २३

दळं किञ्चित् समादाय चुळुकं जलमेव वा ॥ २३ ॥
यो दत्ते नियमेनासौ तस्मै दत्तं जगत्त्रयम् ।

दळं बिल्वादि चुळुकं करसंपुटसमन्वितं । एवकारेणातिरिक्तवस्त्वपेक्षा व्यावर्तते ॥ वाकारेण जलदलयोर्विकल्पः । मन्त्रपुष्पमयी दूर्वा (माला) सर्वं वस्तुमयं जलमिति-वचनाद्यमुनाद्याश्रितं वस्त्रशोधनादिपूतं जलमेव शिवपूजार्हं । पत्रं च छिद्रादिरहितं उक्तं च पुराणे । (पूतेन तोयेन च दिव्यवस्त्रैः संस्नाप्य लिंगं लभते सकामान् । प्रचेतसः प्राप्य पदं प्रसन्नः स मोदते देववधूसहस्रैः । इति. पुष्पैश्च पत्रैः गिरिजैश्च वन्यैः स्वारा-

मजैः छिद्रकर्कोटहीनैः । नवैनं भूमौ पतितैश्च शुद्धैः पूजाखिलानाम्मनुजैर्विधेया ॥ )
तथा चालसस्य कथमेतादृशद्रव्यलाभ इत्यत आह ॥ २३.

तत्राप्यशक्तो नियमात् नमस्कारं प्रदक्षिणम् ॥ २४ ॥
यः करोति महेशस्य तस्य तुष्टो भवेत् शिवः ।

तत्र पूर्वोक्तद्रव्यासंपादने नमस्कारं करोतीति संबन्धः । द्रव्यान्तरोपादानापेक्षया स्वशरीरमात्रे व्यापारे नमस्काररूपं लाघवमस्ति उक्तं च महाभारते- (इष्टं दत्तमधीतं च यज्ञाश्च बहुदक्षिणाः । शिवलिंगप्रणामस्य कलां नार्हन्तु षोडशी) मिति । ननु (उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोष्टांग उच्यते ॥ ) इति नमस्कारे गौरवमस्तीत्यत आह । प्रदक्षिणमिति तथा च सर्वशरीरव्यापारापेक्षया पादमात्रव्यापाररूपे प्रदक्षिणे लाघव-मस्तीति भावः । उक्तं च प्रदक्षिणफलं (सन्दर्शनार्थं शिवलिङ्गमूर्तेः प्रयान्ति यावन्ति पदानि मर्त्यः । पदे पदे स्याद्धयमेधपुण्यं प्रदक्षिणप्रक्रमणेन तद्वत् ) इति ननु प्रदक्षिणेपि प्रकारभेदः मौनादिनियमश्चास्ति तदुक्तं ब्रह्मकैवर्तके । ( वर्णी सव्यापसव्यं यतिरुभयमपि द्वौ गृहस्थो वनस्थः प्रादक्षिण्यं विदध्यात् वृषगण वृषभान् सोमसूत्रं वृषं च । चण्डं सूत्रं च चण्डं वृषभमिति च यत् तत्प्रदोषेषु कार्यं नत्वा नत्वा प्रणामक्रमणत इतरद्विष्वगंगेन शंभोः । इति स्तोत्रादन्यत्र मौनं पदविरलगतिः मौलिदृष्टाञ्जलिश्च ॥ ) इति नियमः तथा च प्रदक्षिणकरणेपि अतिगुरुत्व-मित्यत आह ॥ २४.

प्रदक्षिणाद्यशक्तोऽपि यः स्वान्ते चिन्तयेत् शिवम् ॥ २५ ॥
गच्छन्समुपविष्टो वा तस्याभीष्टं प्रयच्छति ।

तथा कायिकवाचिकव्यापाराभावात् चिन्तनस्य मनोमात्रव्यापाररूपत्वात् सौलभ्यं स्वान्ते चित्ते शिवं निर्गुणरूपं सगुणं वा चिन्तयेत् स्थूलसूक्ष्मकारणत्रयात् विविच्य साक्षिरूपं निर्गुणं चिन्तयेत् विजानीयात् उक्तं चागमे- श्लो. ( शिवस्वभाव एवैकः चिन्त्यते निरुपाधिकः । ययासौ चेतसो वृत्त्या महायोगस्स उच्यते ॥ ) इति उक्तं च सूतसंहितायां-पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन् । प्रलपन् विसृजन् गृह्णन् उन्मिषन्निमिषन्नपि । अकर्ताहमभोक्ताहमसंगः परमेश्वरः ।

सदा मत्सन्निधानेन चेष्टते सर्वमिन्द्रियम् । इति धार्या मुनिश्रेष्ठ सा समाधिरिहोच्यते ॥ अत्र प्रकृते श्लोके निर्गुणस्वरूपाचिन्तनमस्ति इति द्योतयितुं गच्छन्नित्युक्तं सगुणस्वरूपं चेच्चिन्तनीयं तदङ्गत्वेनाह समुपविष्टोवेति अस्मिन्नर्थे सूत्रकारोप्याह आसीनस्संभवादिति अत्र भाष्यं कर्मांगसंबन्धेषु तावत् उपासनेषु कर्मतन्त्रत्वात् निरासनादि चिन्तनापि सम्यग्दर्शने वस्तुतन्त्रत्वात् ज्ञानस्य इतरेषु तूपासनेषु इत्यादिना आसने नियमो नास्तीति पूर्वपक्षं प्रापय्य सिद्धान्तितं आसीन एवोपासीतेत्यादिना तस्य निर्गुणचिन्तकस्य ज्ञानद्वारा मुक्ति सगुणोपासकस्य तु ब्रह्मलोकप्रापकादिकं च प्रयच्छति । ननु यद्यपि कायिकादि व्यापारापेक्षया मानसव्यापारः सुकरः बह्वायासाभावात् तथापि मनोनिग्रहाधीनः ज्ञानोपासनाभ्यासरूपमनोनिग्रहस्त्वनेकजन्मकृतसुकृतपुञ्जस्य विरक्तस्य शिवप्रसादयुक्तस्य कस्यचिदेव पुरुषधौरेयस्य भवति न तु सर्वस्य पुरुषमात्रस्य। तदुक्तं वासिष्ठे । (अप्यब्धिपानान्महतः सुमेरून्मूलनादपि । अपि वह्न्यशनात् साधो विषमः चित्तनिग्रहः) इति उक्तश्च भगवद्गीतायां (चञ्चलं हि मनः कृष्ण प्रमाथिबलवद्दृढम् । तस्याहं निग्रहम्मन्ये वायोरिव सुदुष्करम् ॥) इत्याशंक्य पुनरपि कायिकपूजामेवातिसुलभां शिवप्रीतिकरां प्रस्तौति ॥

चन्दनं विल्वकाष्ठस्य पुष्पाणि वनजान्यपि ॥ २६ ॥
फलानि तादृशान्येव यस्य प्रीतिकराणि वै ।
दुष्करं तस्य सेवायां किमस्ति भुवनत्रये ॥ २७ ॥

पुनरपि सुलभं वस्त्वतिप्रीतिकरं चाह ॥

वन्येषु यादृशी प्रीतिः वर्तते परमेशितुः ।
उत्तमेष्वपि नास्त्येव तादृशी ग्रामजेष्वपि ॥ २८ ॥

वन्येष्वर्कद्रोणकुसुमादिषु ग्रामजेषु मल्लिकाचंपककुसुमादिषु उक्तं चाभियुक्तैः (अर्कद्रोणप्रभृतिकुसुमैः अर्चनं ते विधेयं प्राप्यं तेन स्मरहर फलं मोक्षसाम्राज्यलक्ष्मीः) इति सुलभद्रव्यप्रीतिमद्देवताभजने मुक्तिसाधने सति तद्विना दुर्लभबहुद्रव्यसाध्ययागादिप्रीतिमदिन्द्रादियष्टारं स्वर्गार्थिनमुपहसति ॥

तं त्यक्त्वा तादृशं देवं यस्सेवेतान्यदेवताम् ।
स तु भागीरथीं त्यक्त्वा काङ्क्षते मृगतृष्णिकाम् ॥ २९ ॥

तं शिवं तादृशं सुलभद्रव्यप्रीतिमन्तं तर्हि किमिति सुलभद्रव्यसाध्यमहाफलशिवपूजायां न सर्वेषाम्मतिरुत्पद्यत इत्याह ॥

किन्तु यस्यास्ति दुरितं कोटिजन्मसुसञ्चितम् ।
तस्य प्रकाशते नासावर्थो मोहान्धचेतसः ॥ ३० ॥

अर्थः शिवपूजादिरूपः मोहान्धचेतसः मोहशब्देन मोहाद्युपलक्षिता अविद्यादिपञ्चक्लेशा उच्यन्ते तैरन्धः आवृतं कलुषीकृतं चेतः अन्तःकरणं यस्य तथोक्तस्येत्यर्थः पूर्वोक्तबिल्वकाष्ठचन्दनवन्यपुष्पादिना पूजां कृतवतः शुद्धचित्तस्य मानसिकशिवद्ध्यानमतिसुलभमित्यत आह सार्धेन ॥

न कालनियमो यत्र न देशस्य स्थलस्य वा ।
यत्रास्य चित्तं रमते तत्र ध्यानेन केवलम् ॥ ३१ ॥
स्वात्मत्वेन शिवस्यासौ शिवसायुज्यमाप्नुयात् ।

कालनियमः ब्राह्ममुहूर्तादिनियमः देशस्य स्थलस्य इत्युभयत्र नियमशब्दानुषंगः देश आर्यावर्तादि स्थलं शिवालयादि न कालनियमो यत्रेति यत्रशब्देनोपासनमुच्यते । यत्रास्येत्यत्र तु यत्रशब्देन कालदेशादिकमुच्यते । तत्र देशकालादौ ध्यानप्रकारमाह । स्वात्मत्वेन शिवस्येति ध्यानफलमाह ज्ञानद्वारा शिवसायुज्यमिति तथा च यः कश्चिदुपासकः केवलं नियमादिरहितोपि शिवं स्वाभिन्नतयोपास्ते असौ ज्ञानद्वारा शिवतादात्म्यं गच्छेदित्यर्थः । ननु शिवस्य स्वात्मत्वे ध्याने शिवे उत्कृष्टे स्वात्मनो निकृष्टस्य जीवस्वरूपस्य दृष्टिः कृता स्यात् । तथा च ब्रह्मदृष्टिरुत्कर्षादिति न्यायविरोधः स्यात् । न केवलं शास्त्रीयन्यायविरोधः किंतु लौकिकन्यायविरोधोपि स्यादित्यत आह ॥

अतिस्वल्पतरायुश्श्रीः भूदेशांशाधिपोऽपि यः ॥ ३२ ॥
स तु राजाहमस्मीति वादिनं हन्ति सान्वयम् ।

सान्वयं सकुलं तथापि परमकारुणिकत्वात् तं प्रत्यनुग्रहमेव करोति शिवः इत्याह सार्धेन ॥ ३३.

कर्तापि सर्वलोकानामक्षय्यैश्वर्यवानपि ॥ ३३ ॥
शिवश्शिवोहमस्मीति वादिनं यं च कंचन ।

आत्मना सह तादात्म्यभागिनं कुरुते भृशं ॥ ३४ ॥

ननु शिवस्य परमकारुणिकत्वेपि कथमनुचितकरणमिति चेन्न प्रकृते विरोधाभासमात्रमेव न तु विरोधः । तथा हि शिवस्य स्वात्मत्वेनेत्यत्र शोधिततत्पदार्थस्य शिवस्य शोधितत्वं पदार्थत्वेनैव चिन्तनन्नार्यमेवोभयत्र चैतन्यस्याविशेषादिति यन्न कथनेति शूद्रादिकमर्पात्यर्थः । तादात्म्यपदेन प्राप्तभेदव्यावृत्तिः भृशमिति पदेन क्रियते । अस्मिन्नध्याये एतावत्पर्यन्तं अथातस्सम्प्रवक्ष्यामि शुद्धं कैवल्यमुक्तिदमिति प्रतिज्ञाय ज्ञानस्वरूपं तत्साधनं श्रवणमननादिकं शिवभक्त्यादिकं तत्साधनं यज्ञादिकं परशिवस्वरूपं च संग्रहेणोक्तं । इतः परं पुरुषार्थचतुष्टयस्यापि साधनं विशिष्यज्ञानस्यांतरंगं अतिरहस्यं वक्तव्यमित्यभिप्रायेणाह ॥

धर्मार्थकाममोक्षाणां पारं यास्यथ येन वै ।
मुनयः तत्प्रवक्ष्यामि व्रतं पाशुपताभिधं ॥ ३५ ॥

धर्मः स्वर्गादिप्रापकादृष्टं अर्थः तत्साधनयागादिनिर्वाहकं धनं कामः इन्द्रियप्रीतिः मोक्षः अविद्यानिवृत्त्यादिः तेषां पारं पूर्णतां यास्यथ प्राप्स्यथ । येन पाशुपतव्रतेन वै शब्द एवकारार्थः मुनय इति वक्ष्यमाणपाशुपतव्रतग्रहणे सावधानार्थं संबोधनं तत् पाशुपतं वक्ष्यामीत्यन्वयः पाशुपतव्रतमेव साधनं सोपस्कारं सफलमाह सार्धेन ॥

कृत्वा तु विरजादीक्षां भूतिरुद्राक्षधारिणः ।
जपन्तो वेदसाराख्यं शिवनामसहस्रकम् ॥ ३६ ॥
सन्त्यज्य तेन मर्त्यत्वं शैवीं तनुमवाप्स्यथ ।

अत्र भूतिधारणमेव पाशुपतव्रतरूपं विरजादीक्षा तदंगभूता उत्तरत्र वक्ष्यमाण तु शब्देन केवलभूतिधारणं व्यावर्त्यते रुद्राक्षधारण अस्मिन्नेव पाद्मपुराणे वेदसाराख्यमिति नामविशिष्टं शिवनामसहस्रकं नमः परायेत्यादिकमिदमुभयमुपस्काररूपं एतस्य फलमाह संत्यज्येति । तेन एतादृशविशेषणविशिष्टेन पाशुपतव्रतेन मर्त्यत्वं संत्यज्य शैवीं तनुमवाप्स्यथ शिवपूजायोग्यां तनुं प्राप्स्यथेत्यर्थः । ततः किमित्यत आह ॥ ३७.

ततः प्रसन्नो भगवान् शंकरो लोकशंकरः॥ ३७ ॥
भवतां दृश्यतामेत्य कैवल्यञ्च प्रदास्यति ।

ततः शिवपूजादियोग्यदेहलाभात् शिवपूजादिना प्रसन्नः प्रसादं कुर्वन् दृश्यतामेत्य वाक्यजन्याखण्डाकारवृत्त्या व्याप्यतामेत्य कैवल्यं मोक्षरूपं वः युष्माकं प्रदास्यति स्वयमेव परमानन्दरूपः प्रत्यगात्मतयाभिव्यक्तो भवतीत्यर्थः तदुक्तं श्रुत्या– 'यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा वृणुते तनूं स्वामिति'।
इदं च पाशुपतादिकं प्रसिद्धमित्याह ॥ ३८.

रामाय दण्डकारण्ये यत्प्रादात्कुम्भसम्भवः ।
तत्सर्वं वः प्रवक्ष्यामि शृणुध्वं भक्तियोगतः ॥ ३८ ॥

रामाय दण्डकारण्ये सीतापहरणानन्तरं यत् पाशुपतव्रतादिकं प्रादात् दत्तवान् ॥

इति श्रीपरमहंसपरिव्राजकाचार्याभिनवनारायणेन्द्रसरस्वतीपूज्यपादशिष्यश्रीमत्परमशिवेन्द्रसरस्वतीविरचितायां शिवगीतातात्पर्यप्रकाशिकायां

॥ प्रथमोऽध्यायः ॥





## ॥ द्वितीयोऽध्यायः ॥

ओम् अगस्त्यो रामाय पाशुपतव्रतप्रदानं कृतवानित्याकर्ण्य तच्छ्रवणोत्सुकास्सन्तः आदरेण तत्सहेतुकं सफलं सप्रकारकं पृच्छन्ति ऋषयः शौनकादयः सार्धं सार्धेन ॥

किमर्थमागतोऽगस्त्यो रामचन्द्रस्य सन्निधिम् ।
कथं वा विरजादीक्षां कारयामास राघवम् ॥ १ ॥
ततः किं प्राप्तवान् रामः फलं तद्वक्तुमर्हसि ।

किमर्थं किं प्रयोजनाय कथमिति विरजादीक्षाप्रकारप्रश्नः ततः विरजादीक्षायां किं फलं प्राप्तवानित्यन्वयः । तत् अगस्त्यागमनप्रयोजनं विरजादीक्षाप्रकारं रामेण प्राप्तफलस्वरूपं चेति त्रितयमित्यर्थः । किमर्थमागतोऽगस्त्य इत्यस्य उत्तरं रामस्य सीतावियोगदुःखनाशाय ज्ञानोपदेशार्थमिति वक्तुं सीताहरणमवतारयति ॥

रावणेन हृता सीता यदा जनकपुत्रिका ॥ २ ॥
तदा वियोगदुःखेन विलपन्नास राघवः ।

रावणेन जनकपुत्रिका जनकस्य ज्ञानित्वेन प्रसिद्धस्य 'जनको ह वैदेह' इति श्रुतिप्रसिद्धस्य पुत्रिका कुमारीवियोगदुःखेन सीतावियोगदुःखफलमाह ॥

निर्निद्रो निरहंकारो निराहारो दिवानिशं ।
मोक्तुमैच्छत्ततःप्राणान् सानुजो रघुनन्दनः ॥ ३ ॥

देहे आस्थारहितः दिवानिशं अहोरात्रं इत्येतन्निर्निद्रादिविशेषणत्रयेऽपि योजनीयं निराहारत्वादिकमेव प्राणत्यागेच्छेत्याह मोक्तुमिति त्यक्तुमित्यर्थः ततः सीतावियोगजदुःखात् सानुजः सलक्ष्मणः यद्यपि लक्ष्मणस्य दुःखं नास्ति तथापि रामदुःखात् दुःखमिति द्रष्टव्यं श्रीरामस्य दुःखोपशमनार्थमेवागस्त्य इति आगत इत्याह ॥

लोपामुद्रापतिर्ज्ञात्वा तस्य सन्निधिमागमत् ।
अथ तं बोधयामास संसारासारतां मुनिः ॥ ४ ॥

लोपामुद्रापतिरिति अगस्त्य इत्यर्थः । तस्य रामस्य सन्निधिं समीपं अथ आगमनानन्तरं रामं दुःखितं संसारासारतां संसारस्य जननमरणादिपरिभ्रमणरूपस्य स्त्रीपुत्रमित्रबन्धुपश्वादिसंयोगवियोगतः असारतां सुखाभावतां असुखरूपतां मुनिः मननशीलः संसारासारज्ञः बोधनप्रकारमेवाह अगस्त्यः ॥ ४

किं विषीदसि राजेन्द्र कान्ता कस्य विचार्यताम् ।
जडः किञ्चिन्न जानाति देहोऽयं पाञ्चभौतिकः ॥ ५ ॥

किं विषीदसि किमर्थं दुःखमनुभवसि, ननु मदीया कान्ता सीता रावणेनापहृता तद्वशाद्दुःखमनुभवामीत्यत आह । कान्तेति कस्य नकस्यापीत्यर्थः । तदुक्तं भाष्यकारैः- ( का ते कान्ता कस्ते पुत्रः संसारोऽयमतीव विचित्रः । कस्य त्वं कः कुत आयातः तत्वं चिन्तय तदिदं भ्रान्तः ॥) इति एवञ्च प्राणिनामुत्पत्तिः प्राण्यन्तरेण संयोगो वियोगश्च कर्मानुरूपो नियत एव वृक्षसम्मेलनपक्षिवद्वक्ष्यति च सायं सायं वासवृक्षं समेता इत्यादिना किं च कान्तावियोगदुःखमनुभवसि तद्दुःखं किं देहस्य उत आत्मनः देहस्य चेत्तत्राह जड इति जडः अचेतनः किञ्चिद्दुःखादिकं देहस्य जडत्वे हेतुमाह पाञ्चभौतिक इति अचेतनस्वरूपभूतपञ्चकारब्धत्वादित्यर्थः तर्हि आत्मनोस्तु तत्राह ॥ ५

निर्लेपः परिपूर्णश्च सच्चिदानन्दविग्रहः ।
आत्मा न जायते नैव म्रियते न च दुःखभाक् ॥ ६ ॥

निर्लेपः असङ्ग इत्यर्थः अनेन परिप्रयुक्तदुःखनिवारितं । स्वतोपि दुःखं नास्तीत्यत आह परिपूर्ण इति अनेन परिस्पन्दप्रयुक्तदुःखराहित्यमुक्तं सत्वेनाबाद्ध्य स्वरूपत्वात् स्वप्रकाशपरमानन्दरूपाच्च दुःखाभाव इत्याह। सच्चिदानन्दविग्रह इति। विग्रहशब्देन स्वरूपमुच्यते आत्मनो जन्ममरणाभावाच्च न दुःखमित्यात्मेति आप्नोतीति वा सर्वमादत्त इति वा अत्तीति वात्मा उक्तञ्चात्मानुभूतिप्रकाशिकायां । (यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततोभावः तस्मादात्मेति कथ्यते । व्याप्नोत्यनवशेषेण सर्पादीन् स्रगिवाखिलान्। कल्पनाधिष्ठानतया प्रत्यगात्मा भवेत्ततः ।

सर्वाधिष्ठानसन्मात्र इत्यशेषजगत्प्रति । अधिष्ठानतया व्याप्तिं श्रुतिः ब्रूते सदात्मनः । स्वचिदाभासमोहेन तदुत्थान्यखिलान्यतः । आदत्ते स्वात्मनः प्राज्ञः तत आत्मेति तं विदुः । सत्य आत्मनि सर्वेऽपि संप्रतिष्ठन्ति ये कलौ । पृथिव्याद्या अनात्मान इति चाथर्वणे वचः । आत्माभासाः पराधीनाः धीवृत्तिर्विषयोन्मुखा । प्रत्यनक्ति यतोऽतोऽसौ आत्मेत्युक्तो मनीषिभिः । विश्वो हि स्थूलभुक् नित्यन्तैजसः प्रविविक्तभुक् । आनन्दभुक् तथा प्राज्ञ इति चागमशासनम् । अव्यावृत्तानन्नुगमः पूर्णस्वात्मन्यवस्थितः । यतोऽस्य सन्ततो भावः तस्मादात्मेति शब्द्यते । तद्विष्णोरिति मन्त्रेण विष्णोस्तत् परमं पदम् । ) चक्षुर्वदाततं व्योम्नि व्याचष्टे प्रत्यगात्मन इति । आत्मनो दुःखभावं वक्तुं 'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैः वाह्यदोषैः' इति श्रुतिसिद्धदृष्टान्तमाह ॥ ६.

सूर्योऽसौ सर्वलोकस्य चक्षुष्ट्वेन व्यवस्थितः ।
तथापि चाक्षुषैः दोषैः न कदाचिद्विलिप्यते ॥ ७ ॥

चक्षुष्ट्वेन व्यवस्थित इति अधिष्ठातृदेवतात्वेनालोकद्वारा चाक्षुषरूपादिप्रकाशकत्वेन चक्षुरनुग्राहकत्वाच्च चक्षुष्ट्वेन व्यवस्थित इत्यर्थः । चाक्षुषैः चक्षुर्निष्ठैः काचकामिलादिभिः प्रतिषिद्धचाक्षुषविषयप्रयुक्तैश्च दोषैः न लिप्यते न संबध्यते । दार्ष्टान्तिकमाहार्द्धेन ॥ ७.

सर्वभूतान्तरात्मापि तद्वद्दुःखैर्न लिप्यते ।

यद्यपि देहेन्द्रियाद्यभिमानवतः जीवस्य दुःखलेपोऽस्ति तथापि सर्वभूतान्तरात्माध्यस्तदेहेन्द्रियाद्यधिष्ठानभूतः सर्वसाक्ष्यपि सन् दुःखैः जीवगतैः न लिप्यते । तथा च श्रुतिः । 'एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' इति । तद्वत् सूर्यवदित्यर्थः । ननु देहो जड इति यदुक्तं तदयुक्तं जीवदशायां देहे ज्ञानादिदर्शनादित्यत आह सार्धेन ॥

देहो हि मलपिण्डोऽयं मुक्तजीवो जडात्मकः ॥ ८ ॥
दह्यते वह्निना काष्ठैः शिवाद्यैः भक्ष्यतेऽपि वा ।
तथापि नैव जानाति विरहे तस्य का व्यथा ॥ ९ ॥

हि यस्मात् देहः अशुचिभास्त्रिकारूपः पितृमातृसम्बन्धिशुक्लशोणितरूपमलपिण्डः

तथा चेत्थमनुमानं सूचितं । देहोऽचेतनः मलपिण्डात्मकत्वात् मृत्पिण्डवत् ननु देहे चैतन्यस्य प्रत्यक्षसिद्धत्वात् बाधितविषयमिदमनुमानमत आह। मुक्तजीव इति तथा च देहस्य चैतन्यं प्राणादिसंबन्धप्रयुक्तं न स्वत इति भावः। ननु प्राणादिसंबन्धे सत्यपि सुषुप्त्यादौ न जानाति पाणिपेषणादिव्यापारेणानन्तरं जानाति तद्वत्प्राणादिसंबन्धाभावेऽपि प्रबलतरव्यापारान्तरे कृते ज्ञानं भविष्यतीत्यत आह। दह्यत इत्यादिना शिवाशब्देन जंबूक उच्यते शिवादिभक्षणं नालिकेरप्रहरादीनामप्युपलक्षणं तथा चोक्तं तत्वकौमुद्यां देहं प्रकृत्य रसान्ता भस्मान्ता विडन्तावेति उक्तं च भागवते कृमिविड्भस्मसंज्ञितमिति जानाति देह इत्यनुषंगः तस्य मलपिण्डात्मकस्य देहस्य जडस्य विरहे अभावे का व्यथा न किंचिदपि दुःखत्वमित्यर्थः। एवं च त्वक्चर्ममांसरुधिरमेदोस्थिमज्जाकफपूयविण्मूत्रादिरूपे बीभत्से अत्यन्तमरमणीये योषित्पिण्डे रमणीयताज्ञानमिति मूढानां कामिनां अविवेकादेव भ्रान्तिरूपं जायते इत्युपहसति चतुष्टयेन ॥ ९.

सुवर्णगौरी दूर्वाया दळवन् श्यामळापि वा ।
पीनोत्तुंगस्तनाभोगभुग्नसूक्ष्मावलग्निका ॥ १० ॥
बृहन्नितंबजघना रक्तपादसरोरुहा ।
राकाशशिमुखी बिंबप्रतिबिंबाधरच्छदा ॥ ११ ॥
नीलेन्दीवरसंकाशनयनद्वयशोभिता ।
मत्तकोकिलसल्लापा मत्तद्विरदगामिनी ॥ १२ ॥
कटाक्षैरनुगृह्णाति मां पञ्चेषुशरोत्तमैः ।
इति यो मन्यते मूढः पञ्चेषुशरशायितः ॥१३ ॥

पञ्चेषुः मन्मथः तस्य शरैः पीडित इति यावत्। अविवेकमेवापादयति ॥

तस्याविवेकं वक्ष्यामि शृणुष्वावहितो नृप ।
नैव स्त्री न पुमानेष नैव चायं नपुंसकः ॥ १४ ॥

तस्य कामुकस्य अवहितः सावधानमनाः नृप राम नैष इति एष आत्मा स्त्री भगचिह्नयुक्तः पिण्डः पुमान् मेढ्रचिह्नयुक्तः भौतिकः पिण्ड एव नपुंसकः उभयविधचिह्नराहितः शिरः पाण्यादिमान् पिण्ड एव तर्हि आत्मापि पिण्डत्रयरूपो न भवति चेत् कीदृग्भूतः अत आह अर्द्धेन ॥

अमूर्तः पुरुषः पूर्णः द्रष्टा देही स जीवनः ।

अमूर्तः मूर्तिवर्जित इत्यर्थः पुरुषः पुरि शरीरे शेत इति तथोक्तः पूर्णः अपरिच्छिन्नः द्रष्टा चेतनरूपः देही देहस्वामी देहविलक्षण इति यावत् । चेतनत्वे हेतुमाह । सजीवन इति जीवनेन प्राणधारणेन सहितः तन्निमित्तभूतमिति यावत् । उक्तं च श्रुतौ न प्राणेनापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुभाश्रुतौ इति । एवमात्मस्वरूपं निरूप्य वैराग्यार्थं स्त्रीपिण्डरूपं निन्दति श्लोकद्वयेन ।

या तन्वंगी मृदुर्बाला मलपिण्डात्मिका जडा ॥ १५ ॥
सा न पश्यति यत् किञ्चित् न शृणोति न जिघ्रति ।
चर्ममात्रं तनुं तस्याः प्रोद्बुद्ध्यस्व च राघव ॥ १६ ॥
या प्राणादधिका सैव हंत ते स्यात् घृणास्पदं ।

चर्ममात्रमिति त्वगादीनामुपलक्षणं प्रोद्बुद्ध्यस्व प्रकर्षेण जानीहि आत्मानात्मनोः जडाजडयोः सर्वोत्कृष्टसर्वनिकृष्टयोः विवेकमिति शेषः । विवेकफलमाह । या प्राणादिति हन्तेदानीं घृणास्पदं जुगुप्सास्पदमेव तावदात्मनः सच्चिदानन्दपरिपूर्णरूपत्वात् स्त्र्यादिपिण्डस्य तद्विरूपत्वात् तद्विरहेप्यात्मनो दुःखस्यावकाशो नास्तीति प्रतिपादितं । इदानीमुक्तार्थमेव दृढीकरोति वैराग्यार्थं दोषोद्घाटनपूर्वकं जायत इत्यादिना ॥

जायन्ते ये हि भूतेभ्यो देहिनः पाञ्चभौतिकाः ॥ १७ ॥
आत्मा हि केवलस्तेषु परिपूर्णस्सनातनः ।

भूतेभ्यः पञ्चीकृतपञ्चमहाभूतेभ्यः जायन्ते ये देहिनः जीवाः तेषामुपाधिद्वारा उत्पत्तिसंभवात् उपाधिप्राधान्येनाह । पाञ्चभौतिक इति तेषूक्तेषूपाधिषु सत्तास्फूर्तिप्रदत्वेन प्रतिबिंबानां जीवानां बिंबत्वेनात्माप्यस्तीत्याह । आत्मेति तथा च कान्तानायकभावः किं साक्ष्यात्मनः उत जीवानामाहोस्वित् उपाधीनां अथवा उपाधिकसाक्षिणः तत्राद्यं प्रत्याहार्द्धेन ॥

का कान्ता तत्र कः कान्तः सर्वे एव सहोदराः ॥ १८ ॥

तत्र परिपूर्णे अद्वितीये एकस्मिन्नात्मनि कथं कान्तानायकभावः स्यात्

एकस्मिन्नसंभवादित्यर्थः। द्वितीयतृतीयपक्षं निराकरोति सर्वे एव सहोदरा इति अत्रापि का कान्तेत्यादि पदपञ्चकमप्यावृत्त्या संबन्धनीयं तत्र तेषु जीवेषु उपाधिविशिष्टेषु उपाधिषु वा का कान्ता तत्र को वा कान्तः मातापितृस्थानीयपञ्चमहाभूतजन्यत्वात् सर्वेषां कान्तानायकभावः सहोदरत्वात् निन्दितः स्यादिति भावः। श्रीरामस्य वैराग्यसिद्ध्यर्थमियं चाद्युक्तिः भरतेन श्रीरामं प्रति राज्यपरिपालनार्थं प्रार्थनवेळायां तस्मिन् समये भरतादीनामभीष्टसिद्ध्यर्थं जाबालिनोक्तलोकायतिकन्यायवत् अन्यथा लोपामुद्रागस्त्ययोरपि तुल्यन्यायपातात् इति चतुर्थं प्रत्याह द्वयेन ॥

निर्मितायां ग्रहावळ्यां तदवच्छिन्नतां गतं।
नभस्तस्यां तु दग्धायां न काञ्चिन् क्षतिमृच्छति ॥ १९ ॥
तद्वदात्मापि देहेषु परिपूर्णः सनातनः।
हन्यमानेषु तेष्वेव स्वयं नैव च हन्यते ॥ २० ॥

ततःउपाधिभूतदेहनाशेप्यात्मनो हानिर्नास्ति किमु वक्तव्यं देहविरह इति भावः। ननु देहहननेप्यात्महननमेव मन्यते लोकः कथं हानिर्नास्तीति तत्राह ॥

हंता चेन्मन्यते हंतुं हतश्चेन्मन्यते हतं।
तावुभौ न विजानीतः नायं हन्ति न हन्यते ॥ २१ ॥

उभौ हन्तृहतौ न विजानीतः न विदितवन्तौ देहे हतेपि आत्मनोऽसंगोदासीनपरिपूर्णरूपत्वात् आत्मा न हन्यते नापि हन्तेत्यर्थः। तथा च भ्रान्तिरेव लोकस्यात्माहतो हन्तेति आत्मनो दुःखप्रसक्तिर्नास्तीति उपसंहरति ॥

तस्मान् नृपातिदुःखेन किं खेदस्यास्ति कारणं।
स्वस्वरूपं विदित्वैव दुःखं त्यक्त्वा सुखी भव ॥ २२ ॥

तस्मात् असंगत्वादित्यर्थः किं खेदस्यास्ति कारणं। न किंचिदपि विषादस्य कारणमित्यर्थः। स्वस्य आत्मनः स्वरूपं असंगोदासीनपरिपूर्णब्रह्मत्वरूपं विदित्वा अपरोक्षतयानुभूय ज्ञानानन्तरं अनर्थनिवृत्तिः आनन्दावाप्तिश्च द्वयमप्यस्तीत्याह। दुःखमित्यादिना श्रीरामः पृच्छतीति शेषः प्रश्नप्रकारमेवाह ॥

मुने देहस्य नो दुःखं नैव चेत्परमात्मनः।
सीतावियोगदुःखाग्निः मां भस्मीकुरुते कथं ॥ २३ ॥

सीतावियोगदुःखाग्निः सीतावियोगजदुःखमेवाग्निरिवाग्निः तापकत्वात् मां भस्मीकुरुते अत्यन्तं तपति आत्मानात्मनोरुभयोरपि दुःखाभावे दुःखानुभवो न स्यात् अनुभूयते च दुःखं तथा च कथमिदमुपपद्यत इति भावः । ननु न्यायेनोभयोरपि दुःखं नास्तीति मया प्रतिपादितं तथा चानुभूयमानस्यापि दुःखस्य शुक्तिकरजतादिवत् भ्रान्तत्वमेव स्यादिति अत आह ॥

सदानुभूयते योर्थः स नास्तीति त्वयेरितः ।
जायतां तत्र विश्वासः कथम्मे मुनिपुंगव ॥ २४ ॥

अर्थः दुःखरूपः दुःखमिथ्यात्वे ननु तव परमात्मनो दुःखाभावेपि ततोन्यस्य भोक्तुः दुःखमस्तीत्यत आह ॥

अन्योत्र चास्ति को भोक्ता येन जन्तुः प्रतप्यते ।
सुखस्य वापि दुःखस्य तद्ब्रूहि मुनिपुंगव ॥ २५ ॥

अत्रेति रामस्य मम देहे परमात्मनः सकाशत् को भोक्ता आस्ति न कोपीत्यर्थः 'नान्यतोस्ति द्रष्टु' इति श्रुतेः । येन दुःखस्य वा भोक्ता जन्तुः जन्यं शरीरं तदभेदाभिमानात् प्रतप्यते तदन्यस्य भोक्तृत्वं दृष्टं चेदिति शेषः । ब्रूहि वद इति रामेण पृष्टः अगस्त्यः मायाविद्ययोः भेदपक्षमाश्रित्य परमात्मन एव जीवत्वेन ईश्वरत्वेन विभागं वक्ष्यन् अविद्याप्रतिबिंबजीवानां वस्तुतो ब्रह्मत्वेपि भोक्तृत्वं भ्रान्त्या प्रतीयते । विवेकजन्याभेदज्ञानेन तन्निवृत्तौ ब्रह्मीभूतः सुखेन तिष्ठतीति सिद्धान्तं वक्तुं मायां तावदाह ॥

दुर्जया शांभवी माया तया संमुह्यते जगत् ।
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं ॥ २६ ॥

ब्रह्मज्ञानं विना मायानिवृत्तेरसंभवात् ब्रह्मज्ञानस्य दुःसंपादत्वादिति भावः । दुर्ज्ञेयेति पाठान्तरं दुर्ज्ञेया ज्ञातुमशक्या सत्वाद्यनिरूपणात् तदुक्तं भाष्यकारैः । अज्ञानं प्रस्तुत्य तच्च न सन्नासन्नापि सदसन्नभिन्नाभिन्नापि विभिन्नाभिन्नकृतच्छिन्ननिरवयवं न सावयवं नोभयं केवलब्रह्मात्मैक्यज्ञानापनोद्यमिति शांभवी ईश्वराधीनां ईश्वरशक्तिरूपा तया मायया वासनारूपया जगत् चतुर्विधप्राणिजातं सम्मुह्यते देहेन्द्रियस्य पुत्रशत्रुमित्रादिषु अहंकारममकाररूपभ्रान्तिमनुभवति । ननु प्रकृ-

तिरेव स्वतन्त्रावन्धकारिणीति सांख्याः तत्राह मायान्तु प्रकृतिं विद्यादिति तुशब्दः शंकाव्यावृत्त्यर्थः ननु। मायेति प्रकृतिरिति पर्यायः तथा च सांख्यमतापेक्षया सिद्धान्ते को विशेषः तत्राह मायिनन्त्विति अत्रापि तुशब्दः शंकाव्यावृत्त्यर्थः सांख्य मते स्वतन्त्राप्रकृतिः बन्धादिकारणं अस्मिन् मते तु ईश्वराधीना शक्तिरूपिणी ब्रह्मज्ञाननाश्या चेति विशेषः मायास्य परमेश्वरस्य शक्तिरूपेण विद्यत इति मायि-नम्महेश्वरं विद्यादित्यनुषंगः तथा च महेश्वर एव मायाशक्तिवशात् जगदुपादा-नकारणं निमित्तं च सूत्रकारैः प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति। ननु ईश्वरश्चेत् जगत्कारणं तर्हीश्वरव्यतिरिक्तस्यात्मनः तव मते अभावात् स एव स्थावरादि-शरीरे प्रविष्टस्सन् दुःखादिकमनुभवति तथा च स्वानिष्टं सृजतीति प्राप्तं तत्राह॥

तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्।

पूर्ववदेव तुशब्दस्यार्थः तस्य परमेश्वरस्यावयवभूतैः ईशस्वरूपैः व्याप्तं संबन्धं इदं जगत् स्थावरादिशरीरश्च चतुष्टय तथा च परमेश्वरावयवभूतानामेव संसारदुःखं न तु परमात्मन इति भावः ननु जीवानां परमेश्वरावयवरूपत्वे परस्य सावयव-त्वादिनित्यत्वादिकं प्राप्तं तत्राह॥

सत्यज्ञानात्मकोनन्तो विभुरात्मा महेश्वरः॥ २७॥
तस्यैवांशो जीवलोकः प्राणिनां हृदये स्थितः।

सत्यज्ञानात्मकः सत्यज्ञानस्वरूपः अनन्तः अन्तरहितः नाशरहितः अनेन कालतः परिच्छेदाभाव उक्तः देशतः परिच्छेदाभावमाह विभुरिति वस्तुतः परिच्छे-दाभावमाह। आत्मेति तथा। च त्रिविधपरिच्छेदरहितस्य चिदात्मनो अखण्डपरिपूर्णस्य सावयवत्वं नास्तीति भावः। तर्हि कथं जीवानां परमेश्वरावयवत्वं उक्तं तत्राह तस्यैवांश इति तस्य महेश्वरस्यांश इवांशो जीवलोकः जीवलोकः जीवोंश इवांशः इत्युक्तं तस्योपचारितांशत्वमेव दृष्टान्तपुरस्सरं उपपादयति सार्द्धेन॥

विस्फुलिंगा यथा वह्नेः जायन्ते काष्ठयोगतः॥ २८॥
अनादिकर्मसंबन्धात् तद्वदंशा महेशितुः।
अनादिवासनायुक्ताः क्षेत्रज्ञा इति ते स्मृताः॥ २९॥

उष्णप्रकाशात्मकस्य वह्नेः काष्ठसंयोगवशात् सोपाधिकस्य काष्ठादिलवभेदेन विस्फु-लिंगाः उष्णप्रकाशरूपाः अग्निभेदाः जायन्ते दार्ष्टान्तिकमाह। अनादिकर्मसंबन्धादिति

यथोपाधितारतम्यवशात् वह्निरिति विस्फुलिंगा इति भेदव्यवहारः । एवमुपाधितारम्यवशादेव महेश्वर इति जीवा इति अंशा इति च व्यवहारभेदः । तत्र शुद्धसत्वप्रधानोपाधिः मायेत्युच्यते तदुपहितचैतन्यं महेश्वरः मलिनसत्वप्रधानोपाधिः अविद्येत्युच्यते । तदुपहितचैतन्यं जीवाः । तेषां जीवानां अंशत्वे हेतुमाह । अनादिकर्मसम्बन्धादिति अविद्यायाः सर्वजीवसाधारण्यात् अविद्याजन्यान्तःकरणनिष्ठकर्मणामेव जीवहेतुत्वं कर्मणां सादित्वे तेषामपीश्वराधीनत्वेनेश्वरस्य वैषम्यनैर्घृण्यप्रसङ्गात् तत्परिहारायानादित्वमुक्तं यथा कर्माणि देवमनुष्यपश्वादिशरीरजन्मकारणं एवं वासनापि तत्तज्जात्युचितव्यवहारकारणमित्याह अनादिवासनायुक्ता इति । विद्यातज्जन्यान्तःकरणेन तदाश्रयकर्मवासनाभ्यां च जीवस्य सुखदुःखानुभवो न संभवति । स्थूलशरीराभावे अतः सुखदुःखानुभवाय तनुः शरीरं अप्यवश्यकमित्यत आह क्षेत्रज्ञा इति । क्षेत्रं शरीरं तज्जानाति अहं स्थूलः कृशो ब्राह्मणः क्षत्रियो ब्रह्मचारी गृहस्थ इत्यभिमन्यते यः सः क्षेत्रज्ञः । ते क्षेत्रज्ञाः एतावत्पर्यन्तं अवच्छिन्नपक्षमुक्त्वा वासनाकर्मभ्यामाक्षिप्तस्यान्तःकरणस्य उपपादनपूर्वकं प्रतिबिंबपक्षमाह ॥

मनोबुद्धिरहंकारश्चित्तं चेति चतुष्टयम् ।
अन्तःकरणमित्याहुः तत्र ते प्रतिबिंबिताः ॥ ३० ॥

संकल्पविकल्पात्मकम्मनः निश्चयात्मिका बुद्धिः अभिमानात्मकोऽहंकारः अनुसंधानात्मकं चित्तमिति विवेकः । अत्रांशप्रतिबिंबपक्षाः सूत्रकारेणोक्ताः अंशो नानाव्यपदेशात् आभास एव चेत्युक्तं च भाष्यकारेण (किं गङ्गांबुनि बिंबितेंबरमणौ चंडालवीथीपयःपूरेवान्तरमस्ति काञ्चनघटीमृत्कुम्भयोर्वांबरे ।) इति ते परमेश्वरांशाः अविद्याद्यवच्छिन्नाः चैतन्यरूपाः तत्र बुद्ध्यादौ प्रतिबिंबिताः प्रतिबिंबभावं प्राप्ताः चैतन्यस्वरूपाणां बुद्ध्यादिप्रतिबिंबितत्वे तदवच्छिन्नत्वे वा प्रयोजनमाहार्धेन ॥ ३०.

जीवत्वं प्राप्नुयुः कर्म फलभोक्तार एव ते ।

जीवत्वं प्राप्तवतां किं प्रयोजनमित्यत आह । कर्मफलेति यथैकस्मिन् पात्रे विद्यमानस्य जलस्य हस्तादिलोडनवशात् चांचल्यादिप्राप्तौ तत्र सूर्यादिप्रतिबिंबस्यापि चांचल्यं दृश्यते न तु जलपात्रांतरावस्थितस्य सूर्यादिप्रतिबिंबस्य नापि बिंबभूतस्याकाशादि--गतसूर्यादेः एवमेतस्मिन् बुद्ध्यादौ प्रतिबिंबितस्य चैतन्यस्य कर्मादिवशात् दुःखादिसम्बन्धे सति बुद्ध्याद्युपाध्यन्तरे प्रतिबिंबितस्य न तत्कर्मप्रयुक्तदुःखादिकं नाप्यपहतपाप्मनः परमेश्वरस्य उक्तव्यवस्थामेव द्रढयति ॥ ३१.

ततो वैपयिकं तेपां सुखं वा दुःखमेव वा ॥ ३१ ॥
त एव भुञ्जते नान्ये यातनेऽस्मिन शरीरके ।

ततः कर्मभेदात् यत्कर्मवशात् येपां सुखदुःखानुभवः तद्व्यतिरिक्ताः तत्कर्मफलभागिनो न भवन्तीत्याह । नान्य इति । ननु किंचित्कर्मविशेपेण केपांचित् सुखदुःखानुभवकाले तदन्येषां सुखदुःखानुभवः नास्तीत्युक्तं । इयं व्यवस्था न संभवति प्रलयकाले अविशेषेण सर्वेपां सुखदुःखानुभवसंभवात् तत्राह यातनेऽस्मिन् शरीरके इति । यातने दुःखप्रधाने आध्यात्मिकाधिदैविकाधिभौतिकतापत्रययुक्तत्वात् दुःखबाहुल्यं अस्मिन् शरीरे । प्रलयकाले तु दुःखस्य शरीरनाशवेळायामेव संभवात् प्रलयकाले सर्वस्मिन् महासुपुप्तिसुखसंभवात् तस्याधिकत्वात् तस्मिन् काले सुखप्राधान्यमभिप्रेत्य इदानीं शरीरे दुःखबाहुल्यसंभवात् यातन इत्युक्तं । न च कर्मव्यवस्थाव्यभिचारः सर्वेपामपि प्राणिनाम्महासुपुप्तिप्रापककर्मोद्बोधतौल्यात् शरीरक इत्युक्तं । प्रसङ्गात् सामान्येन शरीरद्वैविद्ध्यमाह अर्धेन ॥ ३१ ॥

स्थावरं जङ्गमं चेति द्विविधं वपुरुच्यते ॥ ३२ ॥

स्थावरं गमनाशक्तं । जङ्गमं गमनसमर्थं । सामान्येनोक्तं स्थावरजङ्गमद्वयमपि विशेपेण विभजते ॥ ३२ ॥

स्थावरास्तत्र देहाः स्युः वृक्षगुल्मलतादयः ।
जरायुजाण्डजाश्चैव स्वेदजा इति जङ्गमाः ॥ ३३ ॥

गुल्माः वेण्वादिस्तंबाः । लताः वल्लीप्रभृतयः । आदिशब्देन व्रीह्यादिसस्यानि गृह्यन्ते । जरायुजाः जरायुरिति गर्भवेष्टनभस्त्रिका तया सह जाताः । अण्डजाः पक्षिसर्पादयः । स्वेदजाः यूकादयः । उक्तकर्मव्यवस्था श्रुत्यापि प्रदर्शितेत्याह ।

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥ ३४ ॥

कठवल्लीश्रुतिरप्येतच्छ्लोकसमा । योनिं योनिद्वारं शुक्रबीजसमन्विताःसन्तः अन्ये केचिदविद्यावन्तो मूढाः । प्रपद्यन्ते । शरीरत्वाय शरीरग्रहणार्थं । देहिनो देहवन्तो योनिं प्रविशन्तीत्यर्थः । स्थाणुं वृक्षादिस्थावरभावं अन्ये अत्यन्ताधमाः मरणं प्राप्यानुसंयन्ति अनुगच्छन्ति । यथाकर्म यद्यस्य कर्म तद्यथाकर्म यैः यादृशं कर्म इह जन्मनि कृतं तादृशेने-

त्यर्थः । यथाश्रुतं यादृशं च विज्ञानमुपार्जितं तदनुरूपमेव शरीरं प्रतिपद्यन्त इत्यर्थः । यथाप्रज्ञं हि संभवा इति श्रुतेः । ननु प्रतिबिंबरूपे जीवे सुखदुःखादिकमुक्तं तदयुक्तं बिंबभूतपरशिवापेक्षया भेदाभावात् । न च उपाधिसंबन्धात् सुखदुःखाद्यनुभवः, उपाधिनापि चैतन्यरूपस्य जीवस्य वास्तवसंबन्धाभावात् अन्यथा परशिवेऽपि सुखदुःखादिप्रसङ्गादित्यत आह ।

सुख्यहं दुःख्यहं चेति जीव एवाभिमन्यते ।
निर्लेपोऽपि परं ज्योतिः मोहितः शंभुमायया ॥ ३४ ॥

यद्यपि जीवः परं ज्योतिः परशिव एव, तथापि परशिवस्य मायया मोहितस्सन् कर्मवशात् भ्रान्त्या सुख्यहं दुःख्यहमिति शरीराभिमानपुरस्सरं सुखदुःखादिकमनुभवति; न तु परशिवः वशीकृतमायत्वात् । कर्माभावाच्च न परशिवे दुःखादिप्रसक्तिः । इतोऽपि न परशिवस्य दुःखादिप्रसक्तिः किन्तु जीवस्यैव । तदुपाधेः अहङ्कारस्य कामक्रोधाद्यरिषड्वर्गाक्रान्तत्वादित्याह ॥ ३४ ॥

कामः क्रोधस्तथा लोभो मदो मात्सर्यमेव च ।
मोहश्चेत्यरिषड्वर्गमहङ्कारगतं विदुः ॥ ३५ ॥

ननु परशिवस्यापि शुद्धसत्वप्रधानमायापरिणतिरूपाहङ्कारोऽस्त्येव । वक्ष्यति च श्रीरामं प्रति शिवः स्वस्य सर्वविषयाहंभावं । अथाब्रुवमहं देवान् अहमेव पुरातनः । आसं प्रथममेवाहं वर्तामि च सुरेश्वराः । भविष्यामि च लोकेऽस्मिन् मत्तो नान्योस्ति कश्चन । व्यतिरिक्तश्च मत्तोऽस्ति नान्यत् किंचित् सुरेश्वराः । नित्योऽनित्योऽहमनघ इत्यादिना । तथा च परशिवस्यापि अहङ्कारस्य विद्यमानत्वात् सुखदुःखादिकं प्राप्तं तत्राह ॥ ३५ ॥

स एव बाद्ध्यते जीवः स्वप्नजाग्रदवस्थयोः ।
सुषुप्तौ तदभावाच्च जीवश्शङ्करतामियात् ॥ ३६ ॥

स एव मलिनसत्वप्रधानाविद्याकार्यान्तःकरणावस्थाविशेषपरिच्छिन्नाहङ्कारोपाधिक एव. जीवः बाद्ध्यते नतु परशिवः तस्य बाधहेतूनां कामक्रोधादीनामभावात् । तथाहि । नित्यतृप्तत्वात् परशिवस्य कामक्रोधयोरभावः, अनादिबोधसंपन्नत्वात् मोहस्याभावः, अलुप्तशक्त्यनन्तशक्तिद्वयसंपन्नत्वात् लोभाभावः, सर्वज्ञत्वात् मदाभावः,

स्वतन्त्रत्वात् मात्सर्याभावः । उक्तं च 'सर्वज्ञतातृप्तिरनादिबोधःस्वतन्त्रतानित्यमलुप्त-शक्तिः । अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य' इति । किं च परशिव-स्य परमाहङ्कारत्वादपि न दुःखादिप्राप्तिः, जीवस्य तुच्छाहङ्कारत्वात् दुःखादिप्राप्तिः । तथाह्यहङ्कारविवेचनं कृतं ज्ञानवासिष्ठे । 'त्रिविधो राघवास्तीह त्वहंकारो जगत्त्रये । द्वौ श्रेष्ठावितरस्त्याज्यः श्रुणु त्वं कथयामि ते ॥ अहं सर्वमिदं विश्वं परमा-त्माहमच्युतः । नान्यदस्तीति संविद्य परमा सा ह्यहंकृतिः । सर्वस्माद्यतिरिक्तोऽहं वालाग्रादप्यहं तनुः । इति या संविदेवासौ द्वितीयाहंकृतिःशुभा । मोक्षायैव न बन्धाय जीवन्मुक्तस्य विद्यते । पाणिपादादिमात्रोयमहमित्येष निश्चयः । अहं कारस्तृतीयोऽसौ लौकिकः तुच्छ एव सः ॥' इति । अत्राहंकारविवेचनं बहुधाकृतं अस्मत्कृते स्वरूपानुसंधाने अहमिति नामव्याख्यानावसरे । ननु परशिवस्याहङ्का-रविशेषाभावेऽपि मायोपाधेर्विद्यमानत्वात् दुःखादिकमस्तीत्याशंक्य जीवस्यापि अहंकार एव दुःखहेतुः नत्वविद्योपाधिरिति अन्वयव्यतिरेकाभ्यां आह ॥ स्वप्नजाग्रदवस्थयोरि-त्यादिना । तदभावात् तस्याहंकारस्याभावादित्यर्थः चकारस्समुच्चयार्थः । न केवलं दुः-खाभावमात्रं सुषुप्तौ, किन्तु सुखानुभवोऽप्यस्तीत्यत एवोक्तं शंकरतामियादिति । ननु परशिवस्य दुःखाभावे असंगोदासीनस्वरूपत्वात् कथं दुःखहेतुत्वमित्याह ।

स एव मायया स्पृष्टः कारणं सुखदुःखयोः ।
शुक्तौ रजतवद्विश्वं मायया दृश्यते शिवे ॥ ३७ ॥

असङ्गत्वेऽपि मायया शुद्धसत्त्वप्रधानया उपाधिभूतया युक्तस्सन् पुण्यापुण्यकारयि-तृत्वद्वारा सुखदुःखादिसंपादकः । उक्तं च श्रुत्या । 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधुकर्म कारयति तं यमधोनिनीषते' इति । अथवा एता-वत्पर्यन्तं मायाविद्यातत्कार्यभेदप्रपञ्चं व्यावहारिकमङ्गीकृत्य परशिवस्य भोजयितृत्वं जीवस्य भोक्तृत्वं चोक्तं । वस्तुतस्तु जीवस्यापि दुःखानुभवः प्रातीतिक एव नतु व्यावहा-रिक इत्याह माययेति । मायया अविद्यया अज्ञानेनेत्यर्थः स्पृष्टः युक्तः सुखदुःखयोः कारणा ज्ञानवशादेव सुखदुःखानुभवितृत्वभ्रमः जीवस्याप्यसङ्गोदासीनस्वरूपत्वात् । उक्तं च भग-वता । न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः । न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते । नादत्ते कस्यचित् पापं न चैव सुकृतं प्रभुः । अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः । ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । तेषामादित्यवदज्ञानं प्रकाशयति तत्परमिति । न केवलं दुःखाद्यनुभव एव प्रातीतिकः किंतु मायाऽविद्या तत्कार्यान्तःकरणादिरूपः सर्वोऽपि

प्रपञ्चः काल्पनिक इत्याह। शुक्तौ रजतवत् इत्यादिना। मायया अज्ञानेन यथा शुक्तिकाया-मज्ञानवशादेव रजतभ्रमः एवं सच्चिदानन्दाखण्डैकरसासङ्गोदासीनपरिपूर्णस्वरूपे अज्ञान-वशादेव मायाऽविद्यातत्कार्यान्तःकरणादिप्रपञ्चभ्रमः । तदुक्तं ज्ञानवासिष्ठे 'सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि । नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्लमं । शान्त एव चिदाकाशे स्वच्छे समसमात्मनि । समग्रशक्तिखचिते ब्रह्मेति कलिताभिधे । निर्णीय केचित् शून्यत्वं केचिद्विज्ञानमात्रतां । केचिदीश्वररूपत्वं विवदन्ते परस्परं । सर्वमेव परित्यज्य महामौनी भवानघ । निर्वाणवान् निर्मनस्कः क्षीणचित्तः प्रशान्तधीः । आत्मन्येव प्रशान्तात्मा मूकान्धवधिरोपम इति । प्रकृतमुपसंहरति ।

यतो विवेकज्ञानेन न कोऽप्यत्रास्ति दुःखभाक् ।
अतो विरम दुःखात् त्वं किमु वा परितप्यसे ॥ ३८ ॥

यतो यस्मात् न कोपि परशिवः जीवसमुदायो वा न कश्चिदपि दुःखसंबन्धी, दुःखस्यैवाभावात्, प्रातीतिकस्यापि दुःखस्य ज्ञानेन निवृत्तत्वात् । अत्रास्यां व्यवहार-भूमौ जीवपरयोः मध्ये वा ततस्तस्मात् सर्वस्यापि दुःखाभावात् । विरम उपरतिं कुरु। किमु वा । परितप्यसे किमर्थं परितप्यसे परितापस्यावसर एव नास्तीति भावः । श्रीरामेण अर्द्धाङ्गीकारेण उत्तरमुच्यत इत्याह । श्रीरामः इति । अङ्गीकृतानङ्गीकृतांशद्वयमप्याह ॥३८॥

मुने सर्वमिदं सत्यं यन्मदग्रे त्वयेरितं ।
तथापि न जहात्येतत् प्रारब्धादृष्टमुल्बणम् ॥ ३९ ॥

अर्द्धाङ्गीकारद्योतनार्थः सत्यशब्दः । अङ्गीकृतमंशं सूचयति मुने सर्वमिदमिति । व्यावहारिकप्रातीतिकपारमार्थिकपक्षत्रयमित्यर्थः पक्षत्रयं कुत्रोक्तमित्याह । यन्मदग्रे त्वयेरितमिति । अत्र व्यावहारिकपक्षो बहुधा प्रपञ्चितः । तथाहि । किं विषीदसि राजेन्द्रेत्युपक्रम्य, देहो हि मलपिण्डोऽयं, दह्यते वन्हिना काष्ठैश्शिवाद्यैर्भक्ष्यतेऽपि वा, चर्ममात्रं तनुं तस्याः इत्यादिना योषितपिण्डनिन्दापूर्वकं व्यावहारिकदुःखमङ्गीकृत्य तद्दुःखं जीवानामेव नत्वात्मन इति प्रश्नोत्तरक्रमेण जीवश्शङ्करतामियादित्यन्तेन ग्रन्थेन परिणामवादप्रक्रियया । अनन्तरं विवर्तवादप्रक्रियया प्रातीतिकपक्ष उक्तः । शुक्तौ रजतवद्भिन्नमित्यादिना । पारमार्थिकपक्षमाश्रित्य न कोप्यत्रापि दुःखभागित्युक्तं । इदं च पक्षत्रयं सूत्रेऽपि प्रतिपादितं । भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् , तदनन्यत्वमारंभणशब्दादिभ्यः, उपमर्दं चेति । तत्र सोऽकामयत बहुस्यां प्रजायेयेति प्रस्तुत्य विज्ञानं चाविज्ञानं च इत्यादिश्रुतिमाश्रित्य भोक्तृभोग्यापत्तिपरिहारो वर्णितः । स्याल्लोकादिति वाचारंभणं विकारो

नामधेयमित्यादि श्रुतिमाश्रित्य विवर्तवादाङ्गीकारेण तदनन्यत्वमित्युक्तं । यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन किं पश्येदित्यादिश्रुतिमाश्रित्य समाध्यादिसमये ब्रह्मैव स्वयंप्रकाशरूपेणानुभूयते । तद्व्यतिरिक्तं न किञ्चिदिति पारमार्थिकपक्षाङ्गीकारेण उपमर्दनेति उक्तमिति विवेकः । उक्तं च सर्वज्ञमुनिना कृपणधीः परिणाममुदीक्षते क्षपितकल्मषधीस्तु विवर्ततां । स्थिरमतिः पुरुषः पुनरीक्षते व्यपगतद्वितयं परमं पदमिति । परिणाम इत्यथ विवर्त इति बहवोऽहमेव च मुमुक्षुरिति । परिपुष्कलं च परमं पदमित्यवगम्य तिष्ठसि माहिम्नि निज इति च । सर्वमिदं सत्यमिति वदतो रामस्य पूर्वमेवेदं पक्षत्रयं मया वसिष्ठादिमुखेन च ज्ञातमिति तात्पर्यं प्रतीयते । तथाहि यज्ञसंरक्षणार्थं विश्वामित्रेण श्रीरामं प्रत्याह्वाने कृते तस्मिन् समये वैराग्याविर्भावयुक्तेन श्रीरामेण धनादिनिन्दा कृता । तत्र योषित्पिण्डविषये, मांसपाञ्चालिकायास्तु यन्त्रलोले च पञ्जरे । स्नाय्वस्थिग्रन्थिशालिन्याः स्त्रियाः किमिव शोभनमित्यादिना बहूनि दूषणानि उक्तानि । अहङ्कारवशादापत् अहङ्काराद्दुराधयः अहङ्कारवशादीहा नाहङ्कारात् परो रिपुः । तमहङ्कारमाश्रित्य परमं चिरवैरिणं । न भुञ्जे न पिबाम्यंभः किमु भोगान् भजे मुने । सर्वापदां निलयमध्रुवमन्तःस्थमुन्मुक्तमुत्तमगुणेन न संश्रयामि । यस्मादहंकृतिपदं परितोऽतिदुःखं शेषेण मां समनुशाधि महानुभाव ॥ अहंकृतिपदं यस्मिन् देहादावहन्धीः उदेति तदहङ्कारास्पदं देहेन्द्रियादिकं न संश्रयामि आत्मत्वेन नाभिमन्ये दुःखात्मकत्वात् अतः शेषेण मां समनुशाधि । अहंकृतिविषयीकृतात् देहेन्द्रियादेः यच्छिष्यते तेन शिष्यमाणेनाहंकृत्यविषयेण शुद्धेन आत्मस्वरूपेण मां अनुशाधि बोधयेति श्रीरामेण अहङ्कारनिन्दापूर्वमात्मापि विवेचितः । अनेन व्यावहारिकपक्षः श्रीरामस्य स्वयमेव प्रतीतः अवशिष्टं पक्षद्वयं वसिष्ठेनोक्तं । तत्र ब्रह्मव्यतिरिक्तं सर्वं प्रातीतिकमेवेति बहुधा प्रपञ्चितं । तथाहि । साक्षिभूते समे स्वच्छे निर्विकल्पे चिदात्मनि । निरिच्छं प्रतिबिम्बन्ति जगन्ति मुकुरे यथा । एतत्ते राम वक्ष्यामि कार्यकारणतां विना । स्थिता ब्रह्मणि विश्वश्रीः प्रतिभामात्ररूपिणी । इति । दीर्घस्वप्नमिदं विद्धि दीर्घं वा चित्तविभ्रमं । दीर्घं वापि मनोराज्यं संसारं रघुनन्दन । इति, न जायते न म्रियते क्वचित् किञ्चित् कदाचन । जगद्विवर्तरूपेण केवलं ब्रह्म जृंभितं । इति, न शोकोऽस्ति न मोहोऽस्ति न जन्मास्ति जरादयः । यदस्तीह तदेवास्ति विज्वरो भव राघव । दिक्कालाद्यनवच्छिन्नं अदृष्टोभयकोटिकं । चिन्मात्रमक्षयं शान्तं एकं ब्रह्मास्ति नेतरत् । इत्यादिना तृतीयपक्षोऽपि प्रतिपादितः इति तावत्पर्यन्तमङ्गीकृतांशो वर्णितः । किमु वा परितप्यस इति परितापावसरो नास्तीत्युक्तं तन्नाङ्गीक्रियत इत्याह । तथापीत्यादिना । प्रारब्धादृष्टं शरीरजनकादृष्टं । ननु ज्ञानेन सर्वकर्मणां नाशात् कथं प्रारब्धं वर्तत

इति तत्राह उल्बणमिति । फलदानायोन्मुखमित्यर्थः । प्रारब्धव्यतिरिक्तस्य सर्वस्य विनाशेऽपि प्रारब्धकर्मणां भोगादेव क्षयः । उक्तं च सूत्रकारेण, भोगेन त्वितरे क्षपयित्वा संपद्यत इति । इतरे आरब्धपुण्यपापे फलायारब्ध कर्म फलदानं विना तद्वन्तं पुरुषं न जहाति । एतत् दृष्टान्तेनाह ॥ ३९ ॥

मत्तं कुर्यान् यथा मद्यं नष्टाविद्यमपि द्विजम् ।
तद्वत् प्रारब्धभोगोऽपि न जहाति विवेकिनम् ॥ ४० ॥

उपसंहरति—

ततः किं बहुनोक्तेन प्रारब्धसचिवस्स्मरः ।
बाधते मां दिवारात्रं अनाकारोऽपि तादृशः ॥ ४१ ॥

अनाकारः अङ्गहीनः तादृशः अनङ्गत्वेऽपि उत्पन्नः स्त्र्यभिलापरूपः । ततः प्रारब्धकर्मणां दुष्परिहरत्वात् । एवमप्यात्मनः का हानिरित्यत आह ।

अत्यन्तपीडितो जीवः स्थूलदेहं विमुञ्चति ।
तस्मान् सीताप्रये मह्यं उपायः क्रियतां द्विज ॥ ४२ ॥

यद्यप्यात्मा निर्लेपः, यद्यपि चात्मानात्मनोः विवेकः कृतः, तथापि प्रबलप्रारब्धवशात् सीतावियोगजदुःखं अन्तःकरणे उत्पन्नं सत् तदध्यासवशात् तत्प्रतिबिंबजीवद्वारा परमात्मनि अपि प्रतीयते । अतः प्रातीतिकदुःखनिवृत्तिरपि कार्या, ततः किं कर्तव्यमित्यत आह तस्मादित्यादिना । क्रियतां विधीयतां ॥

इति श्रीपरमहंसपरिव्राजकाचार्याभिनवनारायणेन्द्रसरस्वतीपूज्यपादशिष्यश्रीपरमशिवेन्द्रसरस्वतीविरचितायां शिवगीतातात्पर्यप्रकाशिकायां

॥ द्वितीयोऽध्यायः ॥





## ॥ तृतीयोऽध्यायः ॥



अगस्त्य उवाच ॥ श्रीरामेण सीताप्त्युपाये पृष्टेऽपि प्रबलतरप्रयत्नसाध्यविषयापेक्षया तद्विषयदोषदर्शनपुरस्सरं विषयत्याग एव न्याय्य इति श्रीरामं प्रति दृष्टान्तपुरस्सरमाह ।

न गृह्णाति वचः पथ्यं कामक्रोधादिपीडितः ।
हितं न रोचते तस्य मुमूर्षोरिव भेषजम् ॥ १ ॥

श्लोकस्य उक्तार्थ एव तात्पर्यं । ननु सीतालाभाय प्रबलतरप्रयत्नापेक्षेति उक्तं, तत्कथमित्याह ॥ १ ॥

मध्ये समुद्रं या नीता सीता दैत्येन मायिना ।
आयास्यति नरश्रेष्ठ सा कथं तव सन्निधिं ॥ २ ॥

तथा च सीतालाभस्य रावणजयायत्तत्वात् रावणस्य दुर्जयत्वादिति भावः । रावणजयस्य दौर्लभ्यमेव सार्धश्लोकषट्केनाह ॥ २ ॥

बध्यन्ते देवताः सर्वाः द्वारि मर्कटयूथवत् ।
किञ्च चामरधारिण्यो यस्य सन्ति सुराङ्गनाः ॥ ३ ॥
भुङ्क्ते त्रिलोकीमखिलां यश्शंभुवरदर्पितः ।
निष्कण्टकं तस्य जयः कथं तव भविष्यति ॥ ४ ॥
इन्द्रजिन्नाम पुत्रो यः तस्यास्तीशवरोद्धतः ।
तस्याग्रे सङ्गरे देवाः बहुवारं पलायिताः ॥ ५ ॥
कुम्भकर्णाह्वयो भ्राता यस्यास्ति सुरसूदनः ।
अन्यो दिव्यास्त्रसंयुक्तः चिरञ्जीवी विभीषणः ॥ ६ ॥

दुर्गं यस्यास्ति लङ्काख्यं दुर्जयं देवदानवैः ।
चतुरङ्गबलं यस्य वर्तते कोटिसंख्यया ॥ ७ ॥
एकाकिना त्वया जेयः स कथं नृपनन्दन ।
आकांक्षते करे धर्तुं बालश्चन्द्रसमं यथा ॥ ८ ॥
तथा त्वं काममोहेन जयं तस्यापि वांछसि ।

शंभुवरदर्पितेन कैलासचालनसमये कृताशिवशिक्षात्रस्तेन रावणेन स्तोत्रे कृते शिवस्सन्तुष्टो वरं ददाविति प्रसिद्धं रामायणे। किं च आदावेव शिरांसि निकृत्य शिवमुद्दिश्य पूजां कृतवान् रावणः। उक्तं चाभियुक्तैः, शिवशिरसि शिरांसि यानि रेजुः शिव शिव तानि लुठन्ति गृध्रपादैः, इति। किश्चाभियुक्तान्तरैरुक्तं, संतुष्टे तिसृणां पुरामपि रिपौ कण्डूलदोर्मण्डलक्रीडाकृत्तपुनःप्ररूढशिरसो वीरस्य लिप्सोर्वरं, इति च। तथा च आदौ पितामहेन वरं दत्तमिति रामायणादौ वर्तते तद्वरदानं पितामहरूपेण शिवेन वा शिवप्रेरितेन पितामहेन वेति बोद्धव्यं। निष्कण्टकं सुखेन। कोटिसंख्यया अपरिमितसंख्यया। प्रबलतरप्रयत्नसाध्यविषयापेक्षया विषयत्याग एव उचित इति भावः। क्षत्रियव्यातिरिक्तस्यैव, अशक्यार्थस्य संकल्पात् भ्रान्तस्य व्यसनं बहु इति न्यायात्, क्षत्रियस्य तु, हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीमिति न्यायात्, विषयलाभार्थं युद्धमेव कार्यमित्याह ॥

श्रीरामः—

क्षत्रियोऽहं मुनिश्रेष्ठ भार्या मे रक्षसा हृता ॥ ९ ॥
यदि तं न निहन्म्याशु जीवने मेऽस्ति किं फलं ।

हन्मि हननं करोमि। तस्मात् त्वया मां प्रति रावणजय एवोपायो वक्तव्यः न तु विवेक इत्याह ॥ ९ ॥

अतस्ते तत्वबोधेन न मे किञ्चित् प्रयोजनं ॥ १० ॥
कामक्रोधादयः सर्वे दहन्त्येते तनुं मम ।

अतः तत्वबोधस्य अनवसरत्वादित्यर्थः। कुतोऽनवसरत्वं तत्राह कामेत्यादिना। कामः स्त्रीव्यतिकराभिलाषः। न केवलं कामक्रोधलोभादय एव मां बाधन्ते, किंन्तु क्षत्रियोऽहमित्यभिमानोऽपीत्याहार्धेन ॥ १० ॥

अहंकारोऽपि मे नित्यं जीवनं हन्तुमुद्यतः ॥ ११ ॥

इतोऽपि ज्ञानाभ्यासकालो न भवतीत्याह ।

हृतायां निजकान्तायां शत्रुणावमतस्य तु ।
यस्य तत्वबुभुत्सा स्यात् स लोके पुरुषाधमः ॥ १२ ॥

यद्यपि व्याघ्रादिना हृता चेत् दुःखमात्रं अयंतु रावणः वञ्चनापुरस्सरमवमानेन सीतामपहृतवान् । तस्मात् ज्ञानाभ्यासस्य अवसर एव न भवतीत्याह— अवमतस्येति । तु शब्दो विशेषद्योतकः रावणजयार्थव्यापारात् अन्यव्यापारं वारयति । स्वाभिप्रेतमुपसंहरति ॥

तस्मात्तस्य वधोपायं लङ्घयित्वांबुधिं रणे ।
ब्रूहि मे मुनिशार्दूल त्वत्तो नान्योऽस्ति मे गुरुः ॥ १३ ॥

उक्तरीत्या रावणस्यातिबलवत्त्वात् तस्य जयः प्रबलतरोपायसाध्य इत्युक्तं । स उपायः त्वयैव चिन्त्यतां । अन्यएवास्तूपायवक्ता तत्राह त्वत्त इति । मध्ये समुद्रं, दैत्येन मायिना, दुर्गं यस्यास्तीत्यादिना रावणजयो दुर्लभ इत्युक्तं । त्वया लीलया समुद्रस्य पीतत्वात्, अत्युन्नतस्य दुर्गस्य विन्ध्यस्य भूसमतया कृतत्वात् मायिनोरिल्वलवातापिनोः निगृहीतत्वात् एतादृशेन त्वयैव रावणस्य जये उपायो वक्तव्य इति भावः । उपायं वक्तुमुपक्रमत इत्याह श्लोकचतुष्टयेन ॥

अगस्त्य उवाच—

एवं चेत् शरणं याहि पार्वतीपतिमव्ययम् ।
स चेत् प्रसन्नो भगवान् वाञ्छितार्थं प्रयच्छति ॥ १४ ॥
देवैरजेयश्शक्राद्यैः हरिणा ब्रह्मणापि वा ।
स ते वध्यः कथं वा स्यात् शंकरानुग्रहं विना ॥ १५ ॥
अतस्त्वां दीक्षयिष्यामि विरजागममाश्रितः ।
तेन मार्गेण मर्त्यत्वं हित्वा तेजोमयो भव ॥ १६ ॥
येन हत्वा रणे शत्रून् सर्वान् कामानवाप्स्यसि ।
भुक्त्वा भूमण्डलं चान्ते शिवसायुज्यमाप्स्यसि ॥ १७ ॥

एवं चेत् रावणजये कृतनिश्चयश्चेत् यद्वा त्वयैव एतादृशेनागस्त्येन उपायः वक्तव्य इति चेत् । एतादृशसामर्थ्यं मम ईश्वराराधनादेव लब्धं तर्हि त्वयापि ईश्वराराधनमेव कर्तव्यं इत्याह शरणं याहि पार्वतीपतिमिति। प्रसन्नः प्रसादयुक्तः। उक्तं च प्रसादस्य महिमा। अनधीतस्य शास्त्रस्य स्वत एव प्रकाशनं । निग्रहानुग्रहे शक्तिः पर्वतादेस्तु भेदनं । एवमादीनि लिङ्गानि प्रसादस्य सुरर्षभाः । तीव्रस्तीव्रतरः शंभोः प्रसादो न समो भवेत् । एवं रूपप्रसादस्तु शिवया च शिवेन च । जायत इत्यादिना। उक्तं च सूतसंहितायामेवान्यत्र । भगवान् ससुरैस्सर्वैरसुरैस्सिद्धकिंनरैः । मुनिभिर्यक्षगन्धर्वैः तथान्यैस्सर्वजन्तुभिः । भुक्त्यर्थं च विमुक्त्यर्थं पूज्यः पुण्यवतां वर । इति प्रस्तुत्य, विष्णो विश्वजगन्नाथः शङ्करः परमेश्वरः । सर्वसाक्षी महानन्दः तथात्मत्वेन संस्थितः । स एव सर्वजन्तूनां सदात्मा सर्वसाधकः । तस्य प्रसादलेशस्य कणलेशलवेन तु । इदं विष्णुपदं लब्धं त्वया नान्येन हेतुना । अन्येषामपि सर्वेषां पदमस्य प्रसादतः । अनेनेदं जगत्सर्वं विना न भवति स्वयमिति । वाञ्छितार्थं रावणजयद्वारा सीताप्राप्तिं ज्ञानद्वारा मोक्षं च । ननु रावणजयार्थं देवतान्तरभजनं वा किमिति नोपदिष्टं तत्राह देवैरित्यादिना । तपः प्रभावात् साक्षादिन्द्रादिना विष्ण्वादिना वा तज्जयो दुर्लभः किन्तु विष्ण्वादीनामपि उपास्यपरमशिवप्रसादादेव तज्जयो भविष्यति । तथा च तत्प्रसादे यत्नः कार्यः इति भावः । अतः शिवानुग्रहहेतोः दीक्षयिष्यामि विभूतिसंपादनप्रकारं विभूतिधारणप्रकारं च पाशुपतव्रतरूपं वक्ष्यामीत्यर्थः । किं भूतोहमित्याह विरजामार्गमाश्रित इति । अथवा त्वां दीक्षयिष्यामि त्वं विरजामार्गमाश्रितस्सन् तेन मार्गेण मर्त्यत्वं हित्वा शिवपूजास्तोत्रध्यानयोग्यस्सन् शिवपूजादिकं कृत्वा तेजोमयो भव । शिवानुग्रहवशात् त्वमपि शिवमयो भव । उक्तं च तं यथा यथोपासते तथैव भवतीति न्याये । विरजादीक्षामार्गेण प्राप्ततेजोमयत्वेन इदानीं रामस्य दुःखवियोगो जात इत्याह ॥

सूतः—

अथ प्रणम्य रामस्तं दण्डवन्मुनिसत्तमम् ।

उवाच दुःखनिर्मुक्तः प्रहृष्टेनान्तरात्मना ॥ १८ ॥

प्रहृष्टेन प्रहर्षयुक्तेनान्तरात्मना चिच्छायापहान्तःकरणेन । तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया इति न्यायमाश्रित्य गुरुमगस्त्यं स्तौति ॥ १८ ॥

श्रीरामः—

कृतार्थोऽहम्मुने जातो वांछितार्थो ममागतः ।
पीतांबुधिः प्रसन्नस्त्वं यदि मे किमु दुष्करम् ॥ १९ ॥

पीतांबुधिः इत्युपलक्षणं विन्ध्यगर्वनिर्वापण इल्वलादिनिषूदनेत्यादि द्रष्टव्यं । गुरुमभिमुखीकृत्य विरजादीक्षाप्रकार मम उपदिशेत्याह अर्द्धेन ॥ १९ ॥

अतस्त्वं विराजां दीक्षां ब्रूहि मे मुनिसत्तम ।

आदौ विरजादीक्षाकालमाह ।

अगस्त्यः—

शुक्लपक्षे चतुर्दश्यामष्टम्यां वा विशेषतः ॥ २० ॥
एकादश्यां सोमवारे आर्द्रायां वा समारभेत् ।

आर्द्रादिकालमुक्त्वा पाशुपतव्रतयोग्यतासिद्ध्यर्थं ध्यानविशेषमाह श्लोकचतुष्टयेन

यं वा तमाहुर्यं रुद्रं शाश्वतं परमेश्वरं ॥ २१ ॥
परात्परतरं चाहुः परात्परतरं शिवं ।
ब्रह्मणो जनकं विष्णोः वह्नेर्वायोः सदा शिवम् ॥ २२ ॥
ध्यात्वाग्निनावसथ्याग्निं विशोध्य च पृथक् पृथक् ।
पञ्चभूतानि संयम्य मात्रागुणविधिक्रमात् ॥ २३ ॥
मात्राः पञ्च चतस्रश्च त्रिमात्रा द्विस्स्मृताः परम् ।
एकमात्रममात्रं हि द्वादशान्ते व्यवस्थितम् ॥ २४ ॥
स्थित्वा स्थाप्यामृतो भूत्वा व्रतं पाशुपतं चरेत् ।

यं परमात्मानं वा तं सूत्रात्मानं रुद्रमूर्त्यन्तर्गतं शाश्वतं त्रिमूर्त्यतिरिक्तं मायाविशिष्टं परमेश्वरं निष्कलात् परमशिवात् आविर्भूतमित्यर्थः। परात्परतरं अत्र परशब्देन उक्तमायाविशिष्ट ईश्वर उच्यते। तस्मात् परात् परः निष्कलः परशिवः तमित्यर्थः। उक्तं चागमे। अथोत्पत्तिं प्रवक्ष्यामि जानायां सर्वसंहृतौ। एक एव शिवस्त्वास्ते परमानन्दलक्षणः। जगदुत्पत्तिहेत्वर्थं निष्कलात्परमाच्छिवात् । समुद्भूतः परः तस्मात् इति। अत्र परशब्देन विन्दुशब्दाभिधेयः मायाविशिष्ट ईश्वर उक्तः। सदाशिवः सदाशिवशब्देन निष्कलः

परशिव एवोक्तः । अत्र बह्वृचश्रुतिः । सोमः पवतेजनितामतीनां जनितादिवोजनिता पृथिव्याः । जनिताग्नेः जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोरिति । अस्य उपबृंहणं सनत्कुमारसंहितायां प्रभाकरं प्रति श्रीविष्णुवचनम् । मतीनां च दिवः पृथ्व्याः वह्नेः सूर्यस्य वज्रिणः । साक्षादपि च विष्णोश्च सोमो जनयितेश्वर इति । ब्रह्माण्डपुराणे, द्यावापृथिव्योरिन्द्राग्न्योः विष्णोर्धातुर्यमस्य च । वरुणस्य शशाङ्कस्य जनिता परमेश्वर इति । महाभारते आनुशासनिके अष्टाचत्वारिंशाध्याये युधिष्ठिरं प्रति श्रीकृष्णवचनं । या ऽसृजत् दक्षिणादङ्गात् ब्रह्माणं लोकसंभवम् । वामपार्श्वात् तथा विष्णुं लोकरक्षार्थमीश्वरः । युगान्ते चैव संप्राप्ते रुद्रं हृदयदेशतः । स रुद्रः संहरन् कृत्स्नं जगत्स्थावरजङ्गमम् । कालो भूत्वा परं रूपं याति संवर्तकोऽनलः । अयमेव महादेवः यन्मे साक्षात् कृतः प्रभुरिति । एवं भूतं परशिवं ध्यात्वा स्थित्वा स्थाप्य अकुतोभूत्वा व्रतं चरेदिति सम्बन्धः । परशिवध्यानानन्तरकृत्यमाह । अग्निनावसथ्याग्निं विशोध्येति । अग्निना विवेकाग्निना आवसथ्याग्निं आवसथो देहः तत्र विद्यमानो अग्निः जीवः प्रकाशमानत्वात् अग्नि-रित्युच्यते तं विशोध्य स्थूलसूक्ष्मभूतरावृतं तेभ्यः पृथक्कृत्य । तेभ्यः पृथक्करणार्थं कृत्यमाह पृथक् पृथक् पञ्चभूतानि संयम्येति । संयमशब्दः धारणाध्यानसमुदायार्थः उक्तं च, त्रयमेकत्र संयम इति । अत्र तु संयमशब्देन पृथिव्यादीनां प्रविलापनार्थं यथा-कथंचित् चिन्तनमेवोच्यते । केन क्रमेण पृथिव्यादिचिन्तनं कर्तव्यं तत्राह मात्रागुण-विधिक्रमादिति । मीयन्ते ज्ञायन्ते इति मात्राः पञ्चीकृतपञ्चमहाभूतानि तेषां गुणाः गन्धादयः तेषां गन्धादीनां विधिः संख्यासद्भावः अधिकगुणविशिष्टभूतक्रमादित्यर्थः । यद्वा मात्राशब्देन पञ्चतन्मात्राणि अपञ्चीकृतपञ्चमहाभूतान्युच्यन्ते । तान्येव गुणरूपाणि गुणप्रधानानि गन्धतन्मात्रादीनि तेषां विधिः संख्यास्तित्वं तत्क्रमादिति वा । तथा चादौ पञ्चीकृतपञ्चमहाभूतानि यानि पृथिव्यादीनि तत्कार्याणि च यानि घटादीनि तानि सर्वाणि तत्तद्भूतमात्रेण चिन्तयित्वा तान्यपि पृथिव्यादीनि क्रमेण चिन्तयितव्यानि । चिन्तनाप्रकारस्तु घटादिरूपस्वकार्यविशिष्टा पञ्चगुणा भूमिः करादिकार्याभिन्ना चतुर्गुणं जलं एवं जाठरादिप्रभेदभिन्नं त्रिगुणं तेजः प्राणादिकार्यरूपेण विद्यमानः द्विगुणो वायुः कर्णशष्कुल्यवच्छिन्ननभोदेशादिकार्यभेदभिन्न एकगुण आकाशः । अत्र आकाशस्य शब्दः वायोश्शब्दस्पर्शौ तेजसः शब्दस्पर्शरूपाणि । जलस्य शब्दस्पर्शरूपरसाः । पृथिव्याः शब्दस्पर्शरूपरसगन्धाः इति भेदः । एवं पृथिव्यादिक्रमेणैव पञ्चीकृतपञ्चमहाभूतानि अपञ्चीकृतपञ्चमहाभूतकार्याणि ज्ञानेन्द्रियादीनि च अपञ्चीकृतपञ्चमहाभूतापरपर्यायतन्मा-त्रपञ्चकरूपेण चिन्तयेत् । तन्मात्रपंचकेष्वपि गुणतरतमभावः पूर्वमेवोक्तः । तथा च सूक्ष्म-

पृथिवीं सूक्ष्मजलरूपे प्रविलापयेत् । अत्र विलापनं नाम कारणव्यतिरिक्ततया कार्यं नास्तीति चिन्तनं । उक्तं च श्रुत्या पृथिव्या अपि कार्यत्वं, अद्भ्यः पृथिवी इति । एवं सूक्ष्मजलस्य सूक्ष्मतेजसि प्रविलापनं कार्यं सूक्ष्मतेजसः सूक्ष्मवायौ सूक्ष्मवायोः सूक्ष्माकाशे एवं सूक्ष्माकाशस्य तत्कारणे अव्याकृते अव्याकृतस्य शुद्धचैतन्ये प्रविलापनं कार्यं । तदिदमुक्तं मात्राः पञ्चेत्यारभ्यामात्र मित्यन्तेन । यद्यपि तच्चैतन्यं सर्वत्र वर्तते तथापि विशेषेण द्वादशान्ते योगिनामभिव्यज्यत इति द्वादशान्ते स्थितमित्युक्तं । द्वादशान्ते ब्रह्मरन्ध्रे तदुपरि द्वादशांगुलप्रदेशे वा । ननु पूर्वपूर्वभूतस्य उत्तरोत्तरस्मिन् लयो न प्रतीयत इति मैवं सामानाधिकरणस्य विद्यमानत्वात् । यश्चोरः स स्थाणुरितिवत् बाधायां सामानाधिकरण्यसंभवात् । तत्र पञ्चमात्राश्चतस्रः स्युः शब्दस्पर्शरूपरसगन्धात्मकगन्धमात्रस्य शब्दस्पर्शरूपात्मकरसमात्रव्यतिरेकेणाभावः । एवं शब्दस्पर्शात्मकरूपतन्मात्रापेक्षया उक्तरसतन्मात्राभावः । एवं शब्दात्मकस्पर्शतन्मात्रापेक्षया उक्तरूपतन्मात्रस्याभावः एवं शब्दतन्मात्रापेक्षया उक्तस्पर्शतन्मात्रस्याभावः एवमव्यक्तापेक्षया शब्दतन्मात्रस्याभावः । शुद्धचैतन्यापेक्षया अव्यक्तस्याभावः । उक्तं च पुराणे । जगत् प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते । तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते । वायुः प्रलीयते व्योम्नि तदव्यक्ते प्रलीयते । अव्यक्तं पुरुषे ब्रह्मन् निष्कले संप्रलीयते इति । परात्परतरमिति शिवमिति शोधिततत्पदार्थस्वरूपमुक्तं अग्निनावध्यस्थाग्नि विशोद्ध्येत्यादिना द्वादशान्तव्यवस्थितमित्यन्तेन । तत्पदार्थैक्ययोग्यं शोधितत्वंपदार्थस्वरूपमुक्तं । एवञ्च परात्परं शिवं द्वादशान्ते स्थितं चैतन्यस्वरूपं ब्रह्म ध्यात्वा स्वयं ब्रह्मरूपेण स्थित्वा परशिवस्वरूपं ब्रह्मापि शोधितत्वंपदार्थचैतन्यरूपेण स्थाप्यावस्थाप्यति एवामृतो भूत्वा व्रतं चरेदिति निष्कर्षः । ननु स्थित्वा स्थाप्येति पुनरुक्तं न व्यवहारार्थं पदद्वयस्यावश्यकत्वात् । उक्तं च भाष्यकारैः । आत्मेत्युपगच्छति ग्राहयन्ति चेति अस्मिन्नधिकरणे त्वंवाक्यात् अहमस्मि भगवो देव ते अहं वै त्वमसीति श्रुत्या प्रदर्शितं व्यतीहारस्वरूपं किं च पञ्चीकरणेऽप्युक्तं नित्यशुद्धबुद्धमुक्तसत्यपरानन्दाद्वयब्रह्मैवाहमस्मि अहं ब्रह्मास्मीत्यभेदनावस्थानं समाधिरिति व्यतीहारस्य प्रयोजनमुक्तं अस्मद्गुरुचरणैः पञ्चीकरणभावप्रकाशिकायां पंचीकरणव्याख्यानवसरे । ब्रह्मैवाहमस्मीत्येतावन्मात्रे उच्यमाने जीवस्य ब्रह्मात्मत्वं सिद्धं स्यात् ननु ब्रह्मणः जीवस्वरूपतावन्मात्रत्वं यथा पटैकदेशस्य पटतावत् मात्रत्वे पटस्य तदेकदेशतावत् मात्रत्वाभावात् इति तादृशशंकानिवृत्त्यर्थं अहं ब्रह्मास्मीति तथा न पटस्य सावयवत्वेन तथास्तु अत्र तु जीववास्तवस्वरूपब्रह्मणो निरवयवत्वात् परस्परात्मकत्वाच्च

तादृशशङ्काया। अनवकाशः एवमेव तदित्यादि श्रुतौ व्यतीहारो द्रष्टव्यः। पाशुपतव्रतं विरजादीक्षादिपुरस्सरं भस्मधारणं। विरजादीक्षाप्रकारेण भस्मसंपादनप्रकारं भस्मधारणस्वरूपं चाह श्लोकचतुष्टयेन॥

इदं व्रतं पाशुपतं करिष्यामि समाहितः॥ २५॥
प्रातरेव तु सङ्कल्प्य निधायाग्निं स्वशाखया।
उपोषितः शुचिस्स्नातः शुक्लांबरधरःस्वयं॥ २६॥
शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः।
जुहुयाद्विरजामन्त्रैः प्राणापानादिभिस्ततः॥ २७॥
अनुवाकं तमेकाग्रं समिदाज्यचरून् पृथक्।
आत्मन्यग्निं समारोप्य याते अग्नेति मन्त्रतः॥ २८॥
भस्मादायाग्निरित्याद्यैः विमृज्याङ्गानि संस्पृशेत्।

समाहितमनाः समाधानं कृत्वा। अत्र एवमन्वयप्रकारः उपोषितः शुचिस्सन् स्नातः शुक्लांबरधरः शुक्लयज्ञोपवीती शुक्लमाल्यानुलेपनः समाहितः इदं पाशुपतव्रतं करिष्यामीति सङ्कल्प्य स्वशाखया स्वगृह्योक्तविधिना अग्निं निधाय प्राणापानादिभिः प्राणापानव्यानोदानसमाना मे शुध्यन्तां ज्योतिरहं विरजाविपाप्माभूयासंस्वाहा इत्यादिभिः विरजामन्त्रैः समिदाज्यचरून् पृथक् जुहुयादिति। अग्निरित्याद्यैः अग्निरिति भस्म वायुरिति भस्म इत्याद्यैः भस्मादायाभिमन्त्र्य विमृज्य विष्णुरूपतया भावितेन जलेन मिश्रणं कृत्वा अङ्गानि संस्पृशेत् उद्धूलनं त्रिपुण्ड्रं च कुर्यात् एवं वायवीयसंहितायामपि पाशुपतव्रतमाहात्म्य प्रतिपादनपूर्वकं कालदेशनियमानुक्रमेण भस्मोत्पत्त्यर्थं देहशुद्ध्यर्थं च मन्त्रद्रव्यविशेषेण होमप्रकारं चोक्त्वा भस्मादाय सङ्गृह्य भस्मना उद्धूलनप्रकारं त्रिपुण्ड्रधारणप्रकारं तत्तन्मन्त्रादिकं चोक्तं। तथाहि। मुनयः। भगवन् श्रोतुमिच्छामः व्रतं पाशुपतं परं। ब्रह्मादिरपि यत् कृत्वा सर्वपापैः प्रमुच्यते। ब्रह्मविष्ण्विन्द्रदेवाद्याः स चराचरजन्तवः। सर्वे पाशुपता ज्ञेयाः पशवस्सर्व एव हि। वायुः। रहस्यं वः प्रवक्ष्यामि सर्वपापनिकृन्तनं। व्रतं पाशुपतं श्रौतं अथर्वशिरसि स्थितं। कालश्चैत्रापौर्णिमासी देशश्शिवपरिग्रहः। इति, ध्यात्वा देवं च देवीं च तद्विज्ञापनवर्त्मना। व्रतमेतत् करोमीति भवेत् सङ्कल्प्य दीक्षितः। इति, अग्निमादाय विधिवत् विरजाहोमकारणात्। हुत्वाज्येन समिद्भिश्च चरुणा च यथा विधि। इति, तत्त्वान्येतानि तद्देहे शुध्यन्तामित्यनुस्मरन्। पञ्चभूतानि तन्मात्राः पञ्चकर्म-

न्द्रियाणि च । ज्ञानकर्मविभेदेन पञ्चपञ्चविभागशः । त्वगादिधातवः सप्त पञ्चप्राणादिवायवः । मनश्चाहंकृतिः ख्यातिः गुणाः प्रकृतिपूरुषौ । रागो विद्या कला चेति नियतिः काल एव च । माया च शुद्धविद्या च महेश्वरसदाशिवौ । शक्तिं च शिवतत्वं च तत्वानि क्रमशो विदुः । मन्त्रैश्च विरजैः हुत्वा होतासौ विरजो भवेत् । अथ गोमयमादाय पिण्डं कृत्वाभिमन्त्र्य च । न्यस्याग्नौ तं च संरक्ष्य दिने तस्मिन् हविष्यभुक् । प्रभाते तु चतुर्दश्यां कृत्वा सर्वं पुरोदितं । दिने तस्मिन्निराहारः कालशेषं समापयेत् । प्रातः पर्वणि चाप्येवं कृत्वा होमावसानतः । उपसंहृत्य रुद्राग्निः गृह्णीयात् भस्म यत्नतः । इति, प्रक्षाल्य चरणौ पश्चात् द्विराचम्यात्मनस्तनुं । संकलीकृत्य तत्सर्वं विरजानलसंभवं । संकलीकरणं नाम अङ्गन्यासकरन्यासौ । अग्निरित्यादिभिर्मन्त्रैः षड्भिराथर्वणैः क्रमात् । संकलीकृत्य तत्सर्वं विरजानलसंभवं । विमृज्यांगानि मूर्धादि चरणान्तं च तैः स्पृशेत् । ततस्तेन क्रमेणैव समुद्धूल्य च भस्मना । सर्वाङ्गोद्धूलनं कुर्यात् प्रणवेन शिवेन वा । तत्र त्रिपुण्ड्रं रचयेत् त्रियायुषसमाह्वया । शिवभागं समागम्य शिवयोगम् समाचरेत् । कुर्यात्त्रिसन्ध्यमप्येवं एतत्पाशुपतव्रतं । भुक्तिमुक्तिप्रदं चैव पशुत्वं विनिवर्तयेत । तत्पशुत्वं परित्यज्य कृत्वा पाशुपतव्रतं । पूजनीयो महादेवो लिङ्गमूर्तिस्सदाशिवः । इति च । सूतसंहितायां, पुरा विष्ण्वादयो देवाः सर्वे संभूय कारणं । विचार्य जगतो विप्राः संशयाविष्टचेतसः । इति प्रस्तुत्य, अदृष्टपूर्वं तं दृष्ट्वा देवाः विष्णुपुरोगमाः । प्रणिपत्य महादेवं अपृच्छन् को भवानिति । सोऽब्रवीत् भगवान् रुद्रः पशूनां पतिरीश्वरः । सर्वज्ञः सर्वतत्वानां तत्वभूतस्सनातनः । अहमेको जगद्धेतुः आसं प्रथममीश्वरः । वर्तामि च भविष्यामि न मत्तोऽन्योस्ति कश्चन । मन्मायाशक्तिसंक्लृप्तं जगत्सर्वं चराचरं । सापि मत्तः पृथग्विप्राः नास्त्येव परमार्थतः । मामेव वेदवाक्येभ्यो जानात्याचार्यपूर्वकम् । यः पशुः स विमुच्येत ज्ञानाद्वेदान्तवाक्यजात । इत्युक्त्वा भगवान् रुद्रः संपूर्णं रूपमाविशत् । नापश्यंश्च ततो रुद्रं देवा विष्णुपुरोगमाः । अथर्वशिरसा देव अस्तुवंश्चोर्ध्वबाहवः । अन्यैर्नानाविधैस्सूक्तैः श्रीमत्पञ्चाक्षरेण च । पुनस्साक्षाच्छिवज्ञानसिध्यर्थं मुनिपुंगवाः । अग्निहोत्रसमुत्पन्नभस्मादायादरेण च । निधाय पात्रे शुद्धे तत् पादौ प्रक्षाल्य वारिणा । द्विराचम्य मुनिश्रेष्ठाः स पवित्रास्समाहिताः । ओमापस्सर्वमित्येतत् मन्त्रमुच्चार्य भक्तितः । ध्यात्वा विष्णुं जलाध्यक्षं गृहीत्वा भस्म वारिणा । विमृज्य मन्त्रैः जाबालैः अग्निरित्यादि सप्तभिः । समाहितधियः शुद्धाः शिवं ध्यात्वा शिवामपि । समुद्धूल्य मुनिश्रेष्ठाः आपादतलमस्तकं । सितेन भस्मना तेन ब्रह्मभूतेन भावनात् । ललाटे हृदये कुक्षौ दोर्द्वन्द्वे च सुरोत्तमाः ।

त्रिपुण्ड्रधारणं कृत्वा ब्रह्मविष्णुशिवात्मकम् । एवं कृत्वा व्रतं देवाः अथर्वशिरसि स्थिताः । इति । ब्रह्मभूतेनेति ब्रह्मत्वेन भाव्यमानतया ब्रह्मभूतेनेत्यर्थः । अनन्तरं विष्ण्वादीन् प्रति शिववचनम् । अहमेव परं तत्वं मत्तो जातं जगत् सुराः । मय्येव संस्थितं नष्टं मत्समो नाधिकस्सदा । मत्स्वरूपपरिज्ञानादेव संसारनिवृतिः । मम ज्ञानं च वेदान्तश्रवणादेव जायते । मुमुक्षोः व्रतनिष्ठस्य प्रशान्तस्य महात्मनः । त्यक्तकर्मकलापस्य ध्याननिष्ठस्य शूलिनः । यज्ञदानादिभिः क्षीण महापापार्णवस्य च ।' इति । अस्यार्थः तात्पर्यदीपिकायां वर्णितः । तदपि श्रवण अभिहितव्रतादिक्षपितकलुषस्यैव फलपर्यन्तं नान्यस्येत्याह । मुमुक्षोः व्रत इति । विविदिषापरिपन्थिपापापनयनं यज्ञदानादिना उत्पन्नविविदिषस्य मुमुक्षोः वेदनपरिपन्थिपापापनयनं व्रतादिनेत्युक्तं कर्मेति । विक्षेपकत्वेन कर्मकलापस्य ज्ञानविरोधित्वात् । शूलिन इति कर्मणि षष्ठी शिवगोचरं यत् ध्यानं तन्निष्ठस्येत्यर्थः । इति पुनरपि तस्मिन्नध्याये शिववाक्यम् । एवम्मां योऽभिजानाति स सर्वं वेदनेतरः । उक्तं वेदान्तविज्ञानं युष्माकं सुरपुङ्गवाः । व्रतं पाशुपतं चीर्णं यैः द्विजैरादरेण च । तेषामेवोपदेष्टव्यं इति वेदानुशासनं । एतस्यापि ग्रन्थस्य तात्पर्यदीपिका पाङ्क्तिरेव विलिख्यते । स सर्वं वेदेति एकविज्ञानेन सर्वविज्ञानं इति श्रुतेः उक्ताधिकाराभावे जातं विज्ञानमूषरनिक्षिप्तबीजमिव निष्फलं भवेदित्याह । व्रतं पाशुपतं चीर्णमिति । लोकरञ्जनमात्रप्रयोजनतया डांभिकैः कृतमपि व्रतादिकं निष्फलमेवेत्याह । आदरेणेति । इति वेदानुशासनमिति । क्रियावन्तो श्रोत्रिया ब्रह्मनिष्ठाः । स्वयं जुह्वत एकर्षिं श्रद्धयन्तः तेषामेवैतां ब्रह्मविद्यां वदेत शिरो व्रतं विधिवद्यैस्तु चीर्णं इत्यादि श्रुतिभ्यः । अत्र एकर्षिहोमशिरोव्रतादिकं अध्ययनधर्मत्वात् आथर्वणिकानामेव अन्येषां तु शिरोव्रतापरपर्यायं पाशुपतव्रतं पूर्वोक्तं सर्वश्रोत्रसाधारणक्रियावत्वादिकमेव विद्याधिकारणम् । तदुक्तं व्यासेन, स्वाध्यायस्य तथा त्वेन हि समाचारेधिकाराच्च सववच्चतन्नियम इति । इदं पाशुपतव्रतं मयैव रामेण कर्तव्यं । सीतापि प्रयोजनमेव । किं फलमित्याशंक्य त्रैवर्ण्याधिकारिकमिदं तत्रापि विशिष्टब्राह्मणाधिकारिकं न केवलं कामावाप्तिः प्रयोजनं किन्तु पापनिवृत्तिस्वरूपसाक्षात्कारद्वारा मोक्षपर्यन्तं चास्तीत्याह । भस्मनः श्रेष्ठ्यं हेतुप्रतिपादनकारिकापूर्वकं सार्धश्लोकद्वयेनाह ॥

भस्मच्छन्नो द्विजो विद्वान् महापातकसंभवैः ॥ २९ ॥
पापैर्विमुच्यते नित्यं मुच्यते न च संशयः ।
वीर्यमग्नेः यतो भस्म वीर्यवान् भस्मसंयुतः ॥ ३० ॥

भस्मस्नानरतो विप्रो भस्मशायी जितेन्द्रियः ।
सर्वपापविनिर्मुक्तः शिवसायुज्यमाप्नुयात् ॥ ३१ ॥

उद्धूलनरूपेण त्रिपुण्ड्ररूपेण च विद्यमानेन भस्मना छन्नः सर्वांगलेपयुक्त इत्यर्थः। इदं च भस्मधारणं श्रुतिस्मृतिपुराणेतिहासागमेषु नित्यकाम्यतया श्रौतत्वादिना च द्विजात्यधिकारिकमुक्तं । तथा हि । कालाग्निरुद्रजाबाल मुण्डक तैत्तिरियक कैवल्यक श्वेताश्वतर अथर्वशिरोबृहज्जाबालादिषु श्रुतिषु, बोधायन भारद्वाज नारदीय लोकाक्षि क्रियासार स्मृतिरत्नावली धर्मसार सुधानिधि स्मृतिभास्कर स्मृतिसारसमुच्चयादिषु स्मृतिषु, भारत शिवरहस्यादिरूपेतिहासेषु, सूतसंहिता पराशरोपपुराण वासिष्ठ लैङ्ग कूर्म गारुड मानवोपपुराण शंकरसंहिता नारदीय शिवधर्म मानवीयसंहिता वायवीयसंहिता लैङ्ग्य मात्स्यसौरसंहितादिषु पुराणेषु, कालोत्तरसुप्रभादिषु आगमेषु च, तत्र तत्र पाशुपतशिरोव्रत अत्याश्रमशांभव आग्नेयस्नान शिवव्रतादिशब्दवाच्यं सत् भस्मधारणं क्वचिन्नित्यधार्यत्वेन क्वचित्सदा धार्यत्वेन क्वचिदलङ्घनत्वेन क्वचित् फलासंबन्धित्वेन क्वचित् वीप्सायुक्तत्वेन क्वचित् त्यागे दोषाकरत्वेन क्वचिदत्यागचोदनाविहितत्वेन क्वचित् वर्णधर्मत्वेन क्वचिदाश्रमधर्मत्वेन च, अत एव एतादृशैः हेतुभिः नित्यत्वेन क्वचिद्भुक्तिफलकत्वेन क्वचित् ज्ञानांगत्वेन क्वचिद्धरिष्टत्वेन क्वचित् ज्ञानोत्पादकत्वेन क्वचित् संसारनिवर्तकत्वेन क्वचिन्मोक्षार्थत्वेन क्वचित् पापनाशकत्वेन क्वचित् मंगलार्थत्वेन क्वचित् पवित्रार्थकत्वेन क्वचिन्माहेश्वरलिंगत्वेन क्वचिद्व्रतत्वेन क्वचिद्दानादिरूपत्वेन क्वचित् ब्रह्मविष्ण्वादिधर्मत्वेन क्वचित् शिवानुष्ठितत्वेन क्वचित् पिशाचरोगाद्युपद्रवनिवर्तकत्वेन क्वचित् शारीरादिदुःखनिवर्तकत्वेन क्वचिदेकविंशतिकुलोत्तारकत्वेन क्वचित् ब्रह्मादिपूज्यत्वसंपादकत्वेन, अत एवैतादृशैः हेतुभिः काम्यत्वेन क्वचिदग्निहोत्रभस्मसाधनत्वेन क्वचिद्विरजाहोमसिद्धभस्मसाधनत्वेन, अत एव श्रौतत्वेन स्मार्तत्वेन च क्वचित् शिर आदिस्थानविशेषादितिकर्तव्यताकलापयुक्तत्वेन शिर आदिस्थानेष्वेव पञ्चब्रह्मप्रणवत्रियायुषत्र्यंबकहंसादिमन्त्रयुक्तत्वेन च, अत एव त्रैवर्णिकाधिकारकत्वेन भस्मधारणं विहितं । अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ अधीहि भगवन् त्रिपुण्ड्रविधिं सतत्वं किं द्रव्यं किं स्थानं किं तत्वं किं प्रमाणं का रेखाः के मन्त्राः का शक्तिः कः कर्ता किं दैवतं किं फलमिति । तं होवाच भगवान् कालाग्निरुद्रः यद्द्रव्यं तदाग्नेयं भस्म सद्योजातमिति पंचब्रह्ममन्त्रैः परिगृह्य अग्निरित्यनया ऋचाभिमन्त्र्य मानस्तोक इति मन्त्रेण समुद्धृत्य जलेन सम्मृज्य त्रियायुषमिति शिरोललाटवक्षःस्कन्धेषु त्र्यायुषैः त्र्यम्बकैः तिर्यक् तिस्रः

रेखाः प्रकुर्वीत व्रतमेतच्छाम्भवं सर्वेषु वेदेषु वेदवादिभिरुक्तं भवतीति तस्मात्तत्समाचरेत् मुमुक्षुः नपुनर्भवाय । अथ सनत्कुमारः। प्रमाणमस्य त्रिपुण्ड्रधारणस्य त्रिविधा रेखाः आललाटात् आचक्षुषोः आभ्रुवोः आमूर्ध्नोः आमध्यतश्च यास्य प्रथमा रेखा सा गार्हपत्यश्चाकारः रजो भूलोक आत्मा क्रियाशक्तिः ऋग्वेदः प्रातस्सवनं महेश्वरो देवतेति । यास्य द्वितीया रेखा सा दक्षिणाग्निरुकारो सत्वमन्तरिक्षमन्तरात्माचेच्छाशक्तिः यजुर्वेदो माध्यन्दिनं सवनं सदाशिवो देवतेति । यास्या तृतीया रेखा सा आहवनीयो मकारः तमो द्यौर्लोकः परमात्मा ज्ञानमिति शक्तिः सामवेदः त्रितीयसवनं शिवो देवतेति। त्रिपुण्ड्रं भस्मना करोति यो विद्वान् ब्रह्मचारी गृही वानप्रस्थो यतिर्वा स समस्तमहापातक उपपातकेभ्यः पूतो भवति । सर्वान् देवान् ध्यातो भवति सततं रुद्रमन्त्रजापी भवति । सकलं भुज्य देहं त्यक्त्वा शिवसायुज्यमाप्नोति न च पुनरावर्तते न च पुनरावर्तते इत्याह भगवान् कालाग्निरुद्रः । अस्यामुपनिषदि सेतिकर्तव्यताकं सपरिमाणकं सविहृतिकं साधिकारकं समन्त्रकं सफलं च भस्मधारणं साङ्गमुक्तं । अत्र भस्म द्रव्यं अग्निहोत्राद्युत्पन्नं यत् किंचित् विवक्षितं । जाबालोपनिषदि । अग्निरित्यादिना भस्म गृहीत्वा निमृज्याङ्गानि संस्पृशेदिति तथोपरि तिर्यक् त्रिपुण्ड्रं धारयेदिति च । अथ मुण्डकोपनिषदि क्रियावन्तः श्रोत्रियाः ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षि श्रद्धयन्तः तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णं । अत्र शिरोव्रतशब्दस्य भस्मधारणपरत्वं पूर्वमुक्तं।तैत्तिरीयोपनिषदि । भूत्यै न प्रमदितव्यं उद्धूलनत्रिपुण्ड्रात्मकभूतिविषये प्रमादो न कर्तव्य इति । अत्र सूतसंहितायां उपबृंहकवचनं । सत्यात् धर्माच्च कुशलात भस्मनोद्धूलनादपि । त्रिपुण्ड्रधारणाच्चैव स्वध्यायाध्ययनादपि । दैवाच्च पित्र्यात् कार्यात मातापित्रादिपूजनात् । तथान्येभ्यश्च सर्वेभ्यः श्रौतेभ्यश्च तथैव च । स्मार्तेभ्यश्च मुमुक्षुश्चेत् सदा न प्रच्युतो भवेदिति । अनेनापि वचनेन नित्यत्वमुक्तं। पुनरपि बोधायनादिस्मृत्याद्युदाहरणेनायमर्थः स्फुटीभविष्यति । ननु भाष्यकारेण मङ्गलात् कर्मणो न प्रमदितव्यमिति व्याख्यातं"सत्यं विभूतिधारणस्यैव मङ्गलार्थत्वमपि उत्तरत्र उदाहरिष्यमाणवचनैः स्फुटीभविष्यतीति न किञ्चिद्विरोधः । कैवल्योपनिषदि। विविक्तदेशे च सुखासनस्थः शुचिस्समग्रीवशिरश्शरीरः । अत्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्येति। श्वेताश्वतरोपनिषदि । तपः प्रभावात् देवप्रभावाच्च ब्रह्मवित् श्वेताश्वतरोथ विद्वान्। अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यक् ऋषिसङ्घजुष्टं । ननु कैवल्ये श्वेताश्वतरे च अत्याश्रमिशब्देन परमहंस एवोच्यते"सत्यं ज्ञानाधिकारिणां परमहंसानां ज्ञानं प्रति अन्तरङ्गसाधनत्वेन भस्मधारणस्य विधानात् भस्मधारणमपि अनेनैव शब्देनोच्यते । तदुक्तं

कल्पकतरुकारैराचार्यैः। सकृच्छ्रुतपदद्यार्थद्वयकल्पतरुर्नदुध्यांति। संक्षिप्तविस्तृताध्यासलक्ष- णद्वयलाभत इति। उपबृंहकवचनमिति अयमर्थः स्फुटीभविष्यति। अथर्वशिरसि। व्रतमेतत पाशुपतं अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वं ह्वा इदमिति भस्म मन इत्येतानि चक्षूंषि भस्मानि अग्निरित्यादिना निगृही- तानि विमृज्याङ्गानि संस्पृशेत्। तस्मादव्रतमेतत् पाशुपतं पशुपाशविमोक्षायेति। अत्र जा- बालोपनिषदादीनां उपबृंहकवचनानि सूतसंहितायां। अग्निरित्यादिभिर्मन्त्रैः जाबालोप- निषद्गतैः। सप्तभिर्धूलनं कार्यं भस्मना सजलेन च। त्रियायुषेण मन्त्रेण द्विजाः तिर्यक् त्रिपुण्ड्रकं। धार्यं प्रोक्तं द्विजश्रेष्ठ धार्मिकैर्वेदपारगैः। मेधावीत्यादिना वापि ब्रह्मचारी दिने दिने। भस्मना सजलेनैव धारयेच्च त्रिपुण्ड्रकं। त्र्यंबकेन मन्त्रेण प्रणवेन शिवेन च। गृहस्थश्च वनस्थश्च धारयेच त्रिपुण्ड्रकं। ओङ्कारेण त्रिरुक्तेन सहंसेन त्रिपुण्ड्रकं। धारयेत् भिक्षुको नित्यं इति जाबालिकी श्रुतिः। ललाटे चैव दोर्द्वन्द्वे तथैवोरसि बुद्धिमान्। त्रिपुण्ड्रं धारयेन्नित्यं भुक्तिमुक्तिफलप्रदम्। वर्णानामाश्रमाणां च मन्त्रतोऽमन्त्रतोऽपि वा। त्रिपुण्ड्रोद्धूलनं प्रोक्तं जाबालैरादरेण तु। उद्धूलनं त्रिपुण्ड्रं च ज्ञानाङ्गत्वेन सादरम्। आमनन्ति मुनिश्रेष्ठाः अथर्वशिरसि स्थिताः। तथापि मायाविच्छेदो ज्ञानादेव तु केवलात्। अज्ञानस्य तु विज्ञानं बाधकं खलु नेतरत्। व्रतं पाशुपतं येन सम्यगाचरितं बुधाः। तस्य ज्ञानं विजायेत तेन पाशविमोचनम्। उद्धूलनं त्रिपुण्ड्रं च मुमुक्षुस्सम्यगाचरेत्। सत्यादिभ्यः परा भूतिः तथा तिर्यक् त्रिपुण्ड्रकम्। उद्धूलनं नरेदेवं मुमुक्षुः ज्ञानसिद्धये। भस्मनोद्धूलनं चैव तथा तिर्यक् त्रिपुण्ड्रकम्। प्रमादादपि मोक्षार्थी न त्यजेदिति हि श्रुतिः। भस्मनोद्धूलनं चैव तथा तिर्यक् त्रिपुण्ड्रकम्। रक्षार्थं सर्वजन्तूनां विधत्ते वैदिकी श्रुतिः। भस्मनोद्धूलनं चैव तथा तिर्यक् त्रिपुण्ड्रकम्। मङ्गलार्थं च सर्वेषां विधत्ते वैदिकी श्रुतिः। भस्मनोद्धूलनं चैव तथा तिर्यक् त्रिपुण्ड्रकम्। पवित्रार्थं च सर्वेषां विधत्ते वैदिकी श्रुतिः। भस्मनोद्धूलनं चैव तथा तिर्यक् त्रिपुण्ड्रकम्। स्नानत्वेन च सर्वेषां विधत्ते वैदिकी श्रुतिः। भस्मनोद्धूलनं चैव तथा तिर्यक् त्रिपुण्ड्रकम्। तपस्त्वेन च सर्वेषां विधत्ते वैदिकी श्रुतिः। भस्मनोद्धूलनं चैव तथा तिर्यक् त्रिपुण्ड्रकम्। यज्ञत्वेन च सर्वेषां विधत्ते वैदिकी श्रुतिः। भस्मनोद्धूलनं चैव तथा तिर्यक् त्रिपुण्ड्रकम्। सर्वधर्मतया पुंसां विधत्ते वैदिकी श्रुतिः। बृहज्जाबालोपनिषदि। प्रथमब्राह्मणे गोभेदात् विभूतिभेदोत्पत्तिः। द्वितीये अग्नीषो- मात्मकत्वं भस्मनः। त्रितीये गोविशेषात् भस्मसामान्योत्पत्तिः, कल्पानुकल्पादि निरूपणं च। उद्धूलनं च। चतुर्थे त्रिपुण्ड्रानुष्ठानप्रकारः। पञ्चमे विभूतिप्रद्वेषनिन्दा। षष्ठे आख्यायि- कारूपेण भस्ममाहात्म्यं, सप्तमे रुद्राक्षमाहात्म्यं। तत्र तत्र ब्राह्मणे कानिचित् वाक्यानि

लिख्यन्ते । बृहज्जाबालाभिधां मुक्तिश्रुतिं ममोपदेशं कुरुष्वेति ओं तथेति सद्योजातात् पृथिवी तस्याः समाभिवृत्तिः कपिलवर्णा नन्दा तस्या गोमये विभूतिर्जाता । वामदेवादुदकं तस्मात् प्रतिष्ठा तस्या कृष्णवर्णा भद्रा तस्या गोमये भसितं जातं । अघोराद्वह्निः तस्माद्विद्या तस्या रक्तवर्णा सुरभिःतस्या गोमये भस्म जातम् । तत्पुरुषाद्वायुः तस्मात् शान्तिः तस्याः श्वेतवर्णा सुशीला तस्या गोमये क्षारं जातम् । ईशानादाकाशः तस्मात् शान्त्यतीता तस्याश्चित्रवर्णा सुमना तस्या गोमये रक्षा जाता । भूतिर्भसितम् भस्म क्षार रक्षेति भस्मनः भवन्ति पञ्चनामानि । पञ्चभिः नामभिः भृशमैश्वर्यकारणात् भूतिः भस्म सर्वाघभक्षणात् । भासनात् भसितं प्रोक्तं क्षारणात्क्षारमापदाम् । भूतप्रेतपिशाचब्रह्मराक्षसापस्मारसंसारभवभीतिभ्योऽभिरक्षणात् रक्षेति इति प्रथमब्राह्मणसंग्रहः । अग्नेर्वीर्यमिदं प्राहुः तद्वीर्यं भस्म यत्ततः । यथेत्थंभस्म सद्भावं ज्ञात्वा हि स्नाति भस्मना । अग्निरित्यादिभिः मन्त्रैः दग्धपाशस्स मुच्यते । इति द्वितीयब्राह्मणसंग्रहः । अथ भुसुण्डः कालाग्निरुद्रं विभूतियोगं ब्रूहीति होवाच । विकटाङ्गामिति प्रस्तुत्य रोगार्तां गां विहाय प्रशस्तगोमयमाहरेत् । गोमयं खसंस्थं ग्राह्यं शुभे स्थाने वा पतितं परित्यज्याधऊर्ध्वं मर्दयेत् । पञ्चगव्येनेत्यनन्तरं आगाव इति मन्त्रेण धेनुमभिमन्त्रयेत् गावो भगो गाव इति तां प्राशयेत् तृणं जलम् । तामुत्थाप्य प्रयत्नेनाहरेत् । गायत्र्या मूत्रं सौवर्णं रजतं ताम्रं मृण्मये पलाशे गोश्रृंग एव तदाददीत । गन्धद्वारेति गोमयं ग्राह्यं । बुद्धिमान् गोमयं श्रीर्मे भजत्विति शोधयेत् । अलक्ष्मीर्मे नश्यत्विति गोमयस्थानि वर्जयेत् । सन्त्वासिञ्चामीति गोमूत्रं गोमये सिञ्चेत् । पञ्चानां चेति पिण्डांश्चतुर्दश कुर्यात् तरणिर्विरिति संशोष्य किरणैराहरेच्च तान् । पात्रे पिण्डान् प्रतिष्ठाप्य स्वगृह्योक्तविधिनाप्यग्निमिन्धयेत् । आद्यं प्रणवेनाग्नौ प्रक्षिपेत् । मन्त्रस्य षडक्षरस्य व्याप्तस्य अक्षरैः स्वाहान्तं जुहुयात् । वर्णदेवाय पिण्डका मुखान्ते होतव्याः । पञ्चब्रह्माणि नमो हिरण्यबाहव इति चतुर्थ्यन्तं । कद्रुद्राय यस्य वैकङ्कती समाप्य शान्त्यै पुलकं छादयेत् । दिनत्रयेण यदि वा एकस्मिन दिवसे वा ओम् तदग्नेर्नि चित्वाय पौल्कं भस्म परित्यज्य पूजां कुर्यात् अग्नेर्भस्मेत्युत्तमं भस्म गृह्णीयात् । अग्निरसि प्रमृज्य च संयोज्य गङ्गादिसलिलैः कपिलादिमूत्रेण वा प्रणवेनैवावहेत् बृहतो वटकानणोरणीयानिति । चतुर्विधं भस्मकल्पं प्रथममनुकल्पं द्वितीयमुपकल्पं तृतीयमकल्पं चतुर्थमग्निहोत्रसमुद्भूतं कल्पं विकल्पमभिधीयते । चतुर्विधं भस्म पापं निकृन्तयति मोक्षं ददातीत्याह भगवान् कालाग्निरुद्रः इति तृतीयब्राह्मणसंग्रहः । ईशानेन शिरोदेशं मुखं तत्पुरुषेण तु उरोदेशमघोरेण गुह्यं वामेन धूळयेत् । सद्योजातेन पादौ च सर्वाङ्गं प्रणवेन

तु । सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकं । स्त्रियं नपुंसकं गृध्रं विडालं बकमूषिकं । स्पृष्ट्वा तथाविधानन्यान् भस्मस्नानं समाचरेत् । देवाग्निगुरुविप्राणां समीपे त्याज्यदर्शने । अशुद्धभूतले मार्गे कुर्यान्नोद्धूलनं व्रती । शङ्खतोयेन मूलेन भस्मव्यामिश्रणं भवेत् । एपितं चन्दनेनापि वारिणा संयुतं तु वा । चन्दनेन समं लिपेज्ज्ञानार्थी चूर्णमेव तु । मध्याह्नात्प्राग्जलैर्युक्तं सायं तदनु वर्जयेत् । अथ भुसुण्डो भगवन्तं कालाग्निरुद्रं त्रिपुण्ड्रविधिं पप्रच्छ । तत्र श्लोकाः । त्रिपुण्ड्रं कारयेत् पश्चात् ब्रह्मविष्णुशिवात्मकं । मध्यांगुलीभिः तिसृभिः मूलमन्त्रेण मन्त्रितं । अनाममध्यमांगुष्ठैः अथवा स्यात्त्रिपुण्ड्रकं । उद्धूलयेन्मुखं विप्रः क्षत्रियस्तु शिरोदितं । द्वात्रिंशत्स्थानके वापि षोडशस्थानकेऽपि वा । अष्टस्थाने तथा चैव पञ्चस्थानेऽपि योजयेत् । उत्तमाङ्गे ललाटे च कर्णयोर्नेत्रयोस्तथा । नासावक्त्रगलेष्वेवमंसद्वयमतः परं । कूर्परे मणिबन्धे च हृदये पार्श्वयोर्द्वयोः । नाभौ गुह्यद्वये चैवं ऊर्वोस्स्फिक्विवजानुनि । जङ्घाद्वये च पादे च द्वात्रिंशत्स्थानमुत्तमम् । अष्टमूर्त्यर्ष्टविद्येशान् दिक्पालान्वसुभिस्सह । धरो ध्रुवश्च सोमश्च कृपश्चैवानिलोनलः । प्रत्यूषश्च प्रभासश्च वसवोष्टावुदारिताः । एतेषां नाममन्त्रेण त्रिपुण्ड्रं धारयेत् बुधः । विदध्यात् षोडशस्थाने त्रिपुण्ड्रं तु समाहितः । शीर्षके च ललाटे च कर्णे चांसद्वयोरपि । कूर्परे मणिबन्धे च हृदये नाभिपार्श्वके । पृष्ठे चैवं प्रतिष्ठाय जपेत्तत्राधिदेवतान् । शिवं शक्तिं च नादाख्यमीशं विद्याख्यमेव च । वामादिनवशक्तीश्च एताः षोडश देवताः । नासत्यो दस्रकश्चैवमश्विनौ द्वौ समीरितौ । अथवा मूर्ध्न्यलीके च कर्णयोः श्वसने तथा । बाहुद्वये च हृदये नाभ्यामूर्वोर्युगे तथा । जानुद्वये च पदयोः पृष्ठभागे च षोडश । शिवश्चेन्द्रश्च रुद्रार्कौ विघ्नेशो विष्णुरेव च । श्रीश्चैवं हृदये चेशः तथा नाभौ प्रजापतिः । नागाश्च नागकन्याश्च उभये ऋषिकन्यकाः । पादयोश्च समुद्राश्च तीर्थाः पृष्ठेऽपि स्थिताः । एवं षोडशसु ध्यायेत् अष्टस्थानमथोच्यते । गुरुस्थानं ललाटं च कर्णद्वयमनुत्तमं । अंसयुग्मं च हृदयं नाभिरित्यष्टमं भवेत् । ब्रह्मा च ऋषयः सप्त देवताश्च प्रकीर्तिताः । अथवा मस्तकं बाहुं हृदयं नाभिरेव च । पञ्च स्थानान्यमून्याहुः भस्म तत्त्वविदो जनाः । यथा सम्भवतः कुर्यात् देशकालाद्यपेक्षया । देहमुद्धूल्य शक्तश्चेत् त्रिपुण्ड्रादीनि कारयेत् । ललाट हृदय नाभिगळमणिबन्धबाहुमध्यमूलपृष्ठशिरस्सु ललाटे ब्रह्मणे नमः हृदये हव्यवाहनाय नमः नाभौ स्कन्दाय नमः इत्यादिभिर्मन्त्रैरेव द्वादशस्थानेषु त्रिपुण्ड्रं रचयेत् । त्रिणेत्रं त्रिगुणाधारं त्रयाणां जनकं विभुम् । स्मरन्नमश्शिवायेति ललाटे तु त्रिपुण्ड्रकम् । ईशाभ्यां नम इत्युक्त्वा पार्श्वयोस्तु त्रिपुण्ड्रकम् । बीजाभ्यां नम इत्युक्त्वा धारयेच्च

प्रकोष्ठके । कूर्पराधः पितृभ्यां च उमेशाभ्यां तथोपरि । भीमायेति ततः पृष्ठे शिरसः पश्चिमे तथा । नीलकण्ठाय शिरसि क्षिपेत्सर्वात्मने नमः । इति चतुर्थब्राह्मणसङ्ग्रहः । त्रैवर्णिकानामग्निहोत्राग्निजं ग्रहस्थानां विरजानलजं विवाहाग्निजं औपासनाग्निजं वा ब्रह्मचारिणां समिदग्निजं शूद्राणां श्रोत्रियागारपचनाग्निजं अन्येषां दावानलसमुद्भवं यतीनां सर्वत्र स्थितं अतिवर्णाश्रमिणां श्मशानाग्निजं सर्वेषां देवालयस्थितमिति । शिवयोगिनां शिवाग्निजा भूतिः शिवालये स्थितं तल्लिङ्गलिप्तं मन्त्रसंस्कारदग्धं वा । तत्रैते श्लोकाः । तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् । येन विप्रेण शिरसि त्रिपुण्ड्रं भस्मना धृतम् । त्यक्तवर्णाश्रमाचारो लुप्तवर्णक्रियोऽपि यः । सकृत्तिर्यक् त्रिपुण्ड्रांकधारणात्सोऽपि मुच्यते । ये भस्मधारणम्मुक्त्वा कर्म कुर्वन्ति मानवाः । तेषां नास्ति विनिर्मोक्षो संसाराज्जन्मकोटिभिः । महापातकयुक्तानां पूर्वजन्मसु सर्वतः । त्रिपुण्ड्रोद्धूलनद्वेषो जायते सुदृढं बुधाः । येषां द्वेषो भवेत ब्रह्मन् ललाटे भस्मदर्शनात् । तेषामुत्पत्तिसांकर्यमनुमेयं विपश्चिता । ये भस्मधारणं दृष्ट्वा वाचा निन्दन्ति मानवाः । तेषां शूद्रेण संभूतिः अनुमेया विपश्चिता । येषां नास्ति मुने श्रद्धा श्रौते भस्मनि सर्वदा । गर्भाधानादि संस्कारः तेषां नास्तीति निश्चयः । त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्ति शिवमेव ते । धारयन्ति तु ये भक्त्या धारयन्ति तमेव ते । धिग् भस्मरहितं फालं धिग्ग्राममशिवालयम् । धिगनीशार्चनं जन्म धिग्विद्यामशिवाश्रयाम् । इति पञ्चमब्राह्मणसंग्रहः । श्रुतेरेवार्थं स्मृतिरन्वगच्छदिति न्यायात् स्मृतयो लिख्यन्ते । अथातो विभूतिसंपादनधारणविधिं व्याख्यास्यामः । शुचिर्भूत्वा विकटांगामुन्मत्तामशिवां हीनातिरिक्ताङ्गां वन्ध्यामस्थिवेलामशुचिभक्षिणीं रोगिणीं गां विहाय सुलक्षणायाः गोमयमादाय पिण्डं कृत्वा संशोध्य श्वेतवचनीयैः संभारैः परिच्छाद्य गृह्याग्नौ वैताने वा पचने वा उपोपयेत् । बिल्वपात्रे मृण्मये वा स्थापयेत् । अथ तद्भस्मादायाभिमन्त्रयेत् । ईशानस्सर्वविद्यानां ईश्वरः सर्वभूतानां शिवो तत्पुरुषाय प्रचोदयात् । अघोरेभ्यो रुद्ररूपेभ्यः वामदेवाय नमः । मनोन्मनाय नमः । सद्यो जातं प्रपद्यामि भवोद्भवाय नमः । पुनरेवाभिमृशति सद्यो जातं प्रपद्यामीति पञ्चभिः । मानस्तोके तनय इति मध्यमानामिकांगुष्ठैः समादाय तूर्णमद्भिः संयुज्य त्रियायुषमिति त्रिपुण्ड्रं धारयेत् । अथाप्युदाहरन्ति । ललाटे हृदि दोर्द्वन्द्वे गले कुक्षौ शिरस्यधः । धारयेच्चाथ तद्भस्म द्विजो नित्यमतन्द्रितः । इति । भूत्यैन प्रमदितव्यमिति विज्ञायते । तथाप्युदाहरन्ति । मध्यमानामिकांगुष्ठैः त्रिपुण्ड्रं भस्मना कृतम् । तात्त्रिपुण्ड्रं भवेत् शस्तं महापातकनाशनमिति । अथ त्र्यंबकमिति सर्वाङ्गं सम्मृजेत् । पूतो भवति दश पूर्वान् दशापरान् आत्मानं चैकविंशतिम् । भक्तिं च पुनाति । ब्रह्मणः सायुज्यं सलोक-

तामाप्रोतीत्याह भगवान् बोधायन इति च बोधायनसूत्रे । बोधायनस्मृतावपि । सव्येन गोशकृत् ग्राह्यं वामेन त्वभिमन्त्रयेत् । अघोरेण दहेत्पिण्डं ग्राह्यं तत्पुरुषेण तु । स्नानमीशानमन्त्रेण कुर्यान्मूर्द्धादिपादतः । आचम्य कूर्चे आसीनः शिवो भूत्वा शिवं जपेत् । भरद्वाजस्मृतौ । प्राङ्मुखश्चरणौ हस्तौ प्रक्षाल्याचम्य पूर्ववत् । प्राणानायम्य संकल्प्य भस्मस्नानं समाचरेत् । आदाय भसितं श्वेतमग्निहोत्रसमुद्भवं । ईशानेन तु मन्त्रेण स्वमूर्द्धनि विनिक्षिपेत् । तत आदाय तद्भस्म मुखे तत्पुरुषेण तु । अघोराख्येन हृदये गुह्ये वामाह्वयेन च । सद्योजाताभिधानेन भस्म पादद्वये क्षिपेत् । सर्वाङ्गं प्रणवेनैव मन्त्रेणोद्धूळयेत्ततः । एतदाग्नेयकं स्नानमुदितं परमर्षिभिः । सर्वकर्मसमृद्ध्यै च कुर्यादादाविदं बुधः । ततः प्रक्षाल्य हस्तादीन् उपस्पृश्य यथाविधि । तिर्यक्त्रिपुण्ड्रं विधिना ललाटे हृदये गले । पंचभिः ब्रह्मभिर्वापि कृतेन भसितेन च । धृत्वाग्निहोत्रजेनैव भस्मना तु सकृन्नरः । धृतमेतत्त्रिपुण्ड्रं स्यात् सर्वकर्मसु पावनं । त्रिपुण्ड्रं धारयेन्नित्यं सर्वपापविशुद्धये । शूद्रहस्तास्थितं भस्म नैव धार्यं द्विजातिभिः । शूद्रैरन्त्यजहस्तस्थं न धार्यं भस्म जातुचित् । अतोऽग्निहोत्रजेनैव भस्मना तु त्रिपुण्ड्रकं । नित्यं द्विजो प्रमादेन कुर्यात्कर्मविवृद्धये । अन्यथा सर्वकार्याणि न फलन्ति कदाचन । नारदीयस्मृतौ । त्रिपुण्ड्रं परमं पुण्यं ब्रह्मविष्णुशिवात्मकम् । ये घोरा राक्षसाः प्रेताः ये चान्ये क्षुद्रजन्तवः । त्रिपुण्ड्रधारणं दृष्ट्वा पलायन्ते न संशयः । मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा । भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते पातकेभ्यः । सत्यं शौचं जपो होमः तीर्थं देवादिपूजनं । तस्य व्यर्थमिदं सर्वं यः त्रिपुण्ड्रं न धारयेत् । लोकाक्षिस्मृतौ । मध्यमानामिकाङ्गुष्ठैः ललाटे भस्मना कृतं । तत्त्रिपुण्ड्रं भवेच्छस्तं महापातकनाशनम । त्रिपुण्ड्रं धारयेद्यस्तु शिवप्रणतमानसः । भूर्भुवस्स्वस्त्रयो लोकाः धृतास्तेन महात्मना । त्रिपुण्ड्रधृक् विप्रवरो यो रुद्राक्षधरश्शुचिः । सहन्ति रोगदुरितव्याधिदुर्भिक्षतस्करान् । स प्राप्नोति परं ब्रह्म यतो नावर्तते पुनः । स पङ्क्तिपावनः श्राद्धे पूज्यो विप्रैस्सुरैरपि । श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने । धृतत्रिपुण्ड्रः पूतात्मा मृत्युञ्जयति मानवः । इति । क्रियासारस्मृतौ । शुद्धशीतजलेनैव भस्मस्नानं त्रिपुण्ड्रकं । यो धारयेत् परं ब्रह्म स प्राप्नोति न संशयः । येषां वपुर्मनुष्याणां त्रिपुण्ड्रेण विना स्थितं । श्मशानसदृशं तस्मात् न प्रेक्ष्यं पुण्यकृज्जनैः । धिक् भस्मरहितं फालं धिग्ग्राममशिवालयं । धिगनीशार्चनं जन्म धिग्विद्यामशिवाश्रयां । त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्ति शिवमेव ते । धारयन्ति च ये भक्त्या धारयन्ति तमेव ते । किमत्र बहुनोक्तेन वर्ण्यते च पुनः पुनः । मुक्त्वा त्रिपुण्ड्रं मोक्षस्य

साधने न हि विद्यते ॥ यथा कृशानुरहितः स्वध्वरो न विराजते । अशेषसाधनेष्वेवं भस्महीनं शिवार्चनं । मध्याङ्गुलित्रयेणैव सदक्षिणकरस्य तु । षडङ्गुलायतम्मानमपि वाधिकमानकं । नेत्रयुग्मप्रमाणेन फाले दीप्तं त्रिपुण्ड्रकं । कदाचित् भस्मना कुर्यात् स रुद्रो नात्र संशयः । अकारोनामिका प्रोक्ता ह्युकारो मध्यमाङ्गुलिः । मकारस्तर्जनी तस्मात् त्रिभिः कुर्यात् त्रिपुण्ड्रकं । मध्यमानामिकाङ्गुष्ठैः अनुलोमविलोमतः । धारयेद्यस्त्रिपुण्ड्राङ्कं स रुद्रो नात्र संशयः । इति । स्मृतिरत्नावल्यां । मध्यमानामिकाङ्गुष्ठैः ललाटे यत्त्रिपुण्ड्रकं । तत्त्रिपुण्ड्रं भवेच्छस्तं महापातकनाशनमिति । धर्मसारसुधानिधौ । त्रिपुण्ड्रकं सदा कुर्यात् मन्त्रपूतेन भस्मना । वेदोक्तेन विधानेन शिवसायुज्यमाप्नुयात् । इति । स्मृति भास्करे । वनस्पति गते सोमे भस्मोद्धूलितविग्रहः । अर्चितं शंकरं दृष्ट्वा सर्वपापैः प्रमुच्यते । भासनात् भसितं प्रोक्तं भस्म कल्मषभक्षणात् । भूतिर्भूतिकरी पुंसां रक्षा रक्षाकरी परं । इति । स्मृतिसारसमुच्चये । अशुचिर्वाप्यनाचारः मनसा पापमाचरन् । शुचिरेव भवेन्नित्यं त्रिपुण्ड्रस्य तु धारणात् । इति । इतिहासपुराणाभ्यां वेदं समुपबृंहयेदिति न्यायात् इतिहास उदाह्रियते । तत्र भारते । आयुष्कामोऽथवा राजन् भूतिकामोऽथवा नरः । नित्यं वा धारयेत् भस्म मोक्षकामी च वै द्विजः । इति शिवरहस्ये । समस्ततीर्थौघमयी च काशी विश्वेश्वरस्सर्वसुरोत्तमस्स्यात् । समस्ततत्त्वैकरसा विभूतिः तथैव पुण्ड्रौघमयं त्रिपुण्ड्रं । कश्चित्कण्ठगतप्राणः कालप्राप्ते मृतोपमः । शेते श्मशाने विवशो दस्युशस्त्रनिपूदितः । अत्रस्थानां पुलिन्दानां श्वानुगः कश्चिदेव हि । धावन्वेगात्तदन्तःस्थभस्मपुञ्ज इतस्ततः । तच्छाया न ललाटाग्रे न्यस्ताग्निश्च ततो ययौ । एतस्मिन्नन्तरे नेतुं कालमृत्युयमानुगाः । तावता मुच्यमानासुं प्रत्यसंपन्नमुं यदा । तदानीमेव गणपाः नानाप्रहरणोद्यताः । विमानेऽप्सरसां वृन्दैः तं द्रुतं पर्यवारयन् । ततस्ते धर्मराट् प्रेक्ष्य दृष्ट्वा भस्मांगकारणम् । शंभोस्तु शासनं स्मृत्वा हित्वातस्तं च लिंगिनम् । प्रदुद्रुवुः दिशस्ते तं निन्युः शिवपुरं गणाः । इति । यश्चतुर्वेदविद्विप्रो पुराणान्वेत्ति नार्थतः । तं दृष्ट्वा भयमाप्नोति वेदो मां प्रतरिष्यति । इति न्यायात् भस्मश्रुत्युपबृंहकाणि पुराणवचनानि लिख्यन्ते तत्र सूतसंहितायां शिवमाहात्म्यखण्डे । पुनस्साक्षाच्छिवज्ञानसिद्ध्यर्थं मुनिपुंगवाः । अग्निहोत्रसमुत्पन्नं भस्मादायादरेण तु । निधाय पात्रे शुद्धे तत् पादौ प्रक्षाल्य वारिणा । द्विराचम्य मुनिश्रेष्ठाः सपवित्राः समाहिताः । ओमापस्स्वमित्येतत् मन्त्रमुच्चार्य भक्तितः । ध्यात्वा विष्णुं जलाध्यक्षं गृहीत्वा भस्म वारिणा । विमृज्य मन्त्रैर्जाबालैः अग्निरित्यादि सप्तभिः । समाहितधियः शुद्धाः शिवं ध्यात्वा शिवामपि । समुद्धूल्य मुनिश्रेष्ठाः आपादतलमस्तकम् । सितेन भस्मना तेन ब्रह्म-

भूतेन भावनात् । ललाटे हृदये कुक्षौ दोर्द्वन्द्वे च सुरोत्तमाः । त्रिपुण्ड्रधारणं कृत्वा ब्रह्मविष्णुशिवात्मकम् । उपनीतो द्विजो वेदान् इति ब्रह्मचारिणमधिकृत्य, समिदग्निसमुत्थेन विरजानलजेन वा । अग्निहोत्रसमुत्थेन भस्मना सजलेन तु । अग्निरित्यादिभिर्मन्त्रैः षड्भिर्वा सप्तभिः क्रमात् । विमृज्याङ्गानि सर्वाणि समुद्धूल्य ततः परम् । तिर्यक्त्रिपुण्ड्रमुरसा ललाटेन करादिभिः । ग्रीवया च शुचिर्भूत्वा शिवं ध्यात्वा शिवां तथा । मेधावीत्यादिभिर्मन्त्रैर्धारयेद्ब्राह्मणः सदा । इति ज्ञानयोगखण्डे । अस्मिन्नेव खण्डे अथातः संप्रवक्ष्यामि गार्हस्थ्यमिति गृहस्थाश्रमं प्रस्तुत्य 'उद्धूलनं सकृत्कुर्यात्सर्वदा चोक्तवर्त्मना । त्र्यम्बकेण मन्त्रेण सतारेण शिवेन च । त्रिपुण्ड्रं धारयेन्नित्यं गृहस्थाश्रममाश्रितः । तेनाधीतं श्रुतं सर्वं तेन सर्वमनुष्ठितम् । येन विप्रेण शिरसि त्रिपुण्ड्रं भस्मना धृतम् । त्रिपुण्ड्रं धारयेद्भक्त्या मनसापि न लङ्घयेत् । श्रुत्या विधीयते यस्मात् तत्यागी पतितो भवेत् ॥' इति । अथातः सम्प्रवक्ष्यामि वानप्रस्थाश्रम इति प्रस्तुत्य, त्रिपुण्ड्रोद्धूलनं कार्यं गृहस्थस्योक्तमार्गतः । इति, अथातः संप्रवक्ष्यामि संन्यासाश्रममिति प्रस्तुत्य, अनन्तरं, चतुर्विधास्तु विज्ञेया भिक्षवो वृत्तिभेदतः । कुटीचको मुनिश्रेष्ठस्तथैव च बहूदकः । हंसः परमहंसश्च तेषां वृत्तिं वदामि ते । इत्यप्युक्त्वा कुटीचकश्च संन्यस्येत्यादिना गायत्रीं जपेन् सदेत्यन्तेन कांश्चिद्धर्मानुक्त्वा, सर्वाङ्गोद्धूलनं कुर्यात् त्रिपुण्ड्रं च त्रिसंधिषु । शिवलिङ्गार्चनं कुर्यात् श्रद्धयैव दिने दिने इत्युक्तम् । अनन्तरं बहूदकश्चेत्यादिना मृत् खनित्रं कूपाणिकामित्यन्तेन बहूदकस्य कांश्चिद्धर्मानुक्त्वा, सर्वाङ्गोद्धूलनं तद्वत् त्रिपुण्ड्रं चैव धारयेत् । इत्युक्तम् । अनन्तरं हंस कमण्डलुमित्यादिना एकं तु वैणवं दण्डं धारयेन्नित्यमादरादित्यन्तेन हंसस्यापि कांश्चिद्धर्मानुक्त्वा, त्रिपुण्ड्रोद्धूलनं कुर्यात् शिवलिङ्गं समर्चयेत् । अष्टग्रासं सकृन्नित्यमश्नीयात् सशिखं वपेत् । इत्यादिकमुक्तम् । अनन्तरं परहंसस्त्रिदण्डं चेत्यादिना त्याज्यधर्मानुक्त्वा अनन्तरं कौपीनाच्छादिना कन्थामित्यादिना वैणवं दण्डमव्रणमित्यन्तेन ग्राह्यधर्मांश्चोक्त्वा अग्निरित्यादिभिर्मन्त्रैः कुर्यादुद्धूलनं मुदा । ओममोमिति च प्रोच्य हंसेन त्रिपुण्ड्रकमित्यादिकमुक्तम् । ज्ञानयोगखण्डे एव दशमाध्याये गर्भस्थस्य चिन्तनं वैराग्यातिशयेनैवं मोक्षकामेन वै पुनः । निरस्य सर्वकर्माणि शान्तो भूत्वा मुमुक्षया । विरजानलजं भस्म गृहीत्वा वाग्निहोत्रजम् । अग्निरित्यादिभिर्मन्त्रैः षड्भिराथर्वणैः क्रमात् । विमृज्याङ्गानिमूर्धादिचरणान्तानि सादरम् । समुद्धूल्य सदाचार्यं प्रणिपत्यात्मविद्यया । संसारसागरं घोरं लङ्घयाम्यहमात्मन इति । अथवाथर्वणैर्मन्त्रैः गृहीत्वा भस्म पाण्डुरम् । सर्वाङ्गोद्धूलनं यत्तदव्रतं प्रोक्तं मनीषिभिः । एतद्वेदशिरोनिष्ठाः प्राहुः पाशुपतं मुने । केचि-

7

च्छिरोव्रतं प्राहुः केचिदत्याश्रम बुधाः । केचित्तु व्रतमित्याहुः केचिच्छाम्भवमैश्वरम् । अस्य व्रतस्य माहात्म्यमागमान्तेषु संस्थितम् । सर्वपापहरं पुण्यं सम्यक्ज्ञानप्रकाशकम् । इति मुक्तिखण्डे नवमाध्याये व्यासस्वरूपवर्णनम् । एतस्मिन्नन्तरे श्रीमान् महाकारुणिकोत्तमः । कृष्णाजिनी सोत्तरीयी आषाढेन विराजितः । भस्मोद्धूलितसर्वाङ्गः शुद्धः तिर्यक्त्रिपुण्ड्रधृक् । रुद्राक्षमालाभरणो जपन् पंचाक्षरं मुदा । शिष्यैस्तादृग्विधैर्युक्तः महात्मा स्वयमागतः । इति । यज्ञवैभवखण्डे प्रथमाध्याये रात्रावसाने सन्नद्धा इति प्रस्तुत्य, ऋषिवर्णनावसरे ऋजवो मृदवःस्वस्थाः सर्वद्वन्द्वविवर्जिताः। रुद्राक्षमालाभरणाः सितभस्मावकुण्ठिताः । त्रिपुण्ड्रावलिभिर्दीप्ताः जटावल्कलसंयुताः । लिङ्गार्चनपरा नित्यं शिवस्यामिततेजस इति अष्टादशे यमं प्रति शतानन्दवचनम् । त्रिपुण्ड्रं भस्मना स्कन्धे ललाटे च तथा हृदि । यो दधाति महाप्रीत्या तम् त्वं परिहर प्रभुम् । अग्निरित्यादिभिर्मन्त्रैर्भस्मनैवावकुण्ठनम् । यः करोति स्वयं देहं तं त्वं परिहर प्रभुम् । विंशेविशिष्टधर्मग्रहणार्थिनः काषायवेषान् ऋषीन् प्रस्तुत्य, गत्वा हिमवतः पार्श्वे त्रिकाल स्नानसंयुताः । भस्मोद्धूलितसर्वाङ्गाः त्रिपुण्ड्राङ्कितमस्तकाः । रुद्राक्षमालाभरणाः जटावल्कलसंयुताः । इति ज्ञानाङ्केभ्यः समासेन भस्मैकं परमं मतम् । भस्मसाधननिष्ठानां साक्षात् भस्म शिवाभिधम् । प्रकाशते यथा शान्त्या शान्तवस्तु परात्परमिति । अत्रैवातश्च संक्षेपमिमं वदामि श्रुतिः प्रमाणं शिव एव केवलम् । वरिष्ठमुक्तं सितभस्मगुण्ठनं विशुद्धविद्या च न चेतरत्परम् । एकविंशे पुरा श्वेता मुनयो मुनिसत्तमाः । संख्या च शतमेषां सह द्वादशसंख्यया । त एते भस्मदिग्धाङ्गाः त्रिपुण्ड्राङ्कितमस्तकाः । रुद्राक्षमालाभरणाः रुद्राराधनतत्परा इति तत्रैव । कुटीचकादिवृत्तिस्थो मुक्तिमिच्छति यो द्विजः । परहंसाभिधां वृत्तिं प्राप्नुयात् शङ्कराज्ञया । सर्वेषामेव भिक्षूणां शान्तिर्दान्तिस्तितिक्षता । स्नानं शौचमहिंसा च मिथ्याभाषणवर्जनं । अग्निरित्यादिभिर्मन्त्रैः भस्मनोद्धूलनं सदा । त्रिपुण्ड्रधारणं तस्मात् ब्रह्मविष्णुशिवात्मकं । लिङ्गे शिवार्चनं नित्यं धर्मः प्रोक्तस्सनातनैः । साक्षाद्वेदान्तवाक्यानां श्रवणं मननं तथा । निदिध्यासनमाचार्यपरिचर्या प्रियेण तु । परहंसस्य धर्मोऽयं विशेषेण समीरितः । इति, द्वा त्रिंशे, त्रिपुण्ड्रमुद्धूलनमास्तिकोत्तमाः समाचरेन्नित्यम तन्द्रितस्तथा । विशेषतश्शङ्करवेदने रतो भवेदशेषः कथितो मयानघाः । चत्वारिंशे । लिङ्गे शिवार्चनं चैव रुद्राक्षाणां च धारणं । अग्निरित्यादिभिर्मन्त्रैः जाबालोक्तैश्च सप्तभिः । त्र्यायुषेण मन्त्रेण भस्मना सजलेन च । सर्वाङ्गोद्धूलनं चैव त्रिपुण्ड्रस्य च धारणं । इति।द्विचत्वारिंशेऽध्याये । शिवध्यानं शिवज्ञानं शिवशब्दजपस्तथा । अग्निरित्यादिभिर्मन्त्रैः भस्मना चावगुण्ठनं । रुद्राक्षधारणं भक्त्या त्रिपुण्ड्रस्य च धारणं । संन्यास-

श्चैव प्रायश्चित्तं महन्तरमिति गजवैभवखण्डे एव । शिवेन विष्णुनाचैव ब्रह्मणा वज्रिणा तथा । देवताभिर्धृतं भस्म त्रिपुण्ड्रोद्धूलनात्मना । ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरपि च संकरैः । अभ्रंशैश्च धृतं भस्म त्रिपुण्ड्रोद्धूलनात्मना । उद्धूलनं त्रिपुण्ड्रं च यैस्सदाचरितम्बुदा । त एव शिष्टा विद्वांसो नेतरे मुनिपुङ्गवाः । उद्धूलनं त्रिपुण्ड्रं च श्रद्धया नाचरन्ति ये । तेषां नास्ति विनिर्मोक्षः संसाराज्जन्मकोटिभिः । उद्धूलनं त्रिपुण्ड्रं च श्रद्धया नाचरन्ति ये । ते महापातकैर्युक्ताः इति शास्त्रस्य निश्चयः । उद्धूलनं त्रिपुण्ड्रं च श्रद्धया नाचरन्ति ये । तैस्समाचरितं सर्वं विपरीतफलाय हि । महापातकयुक्तानां जन्तूनां सर्वजन्मसु । त्रिपुण्ड्रोद्धूलनद्वेषो जायते सुदृढं बुधाः । त्रिपुण्ड्रोद्धूलनश्रद्धा येषां नैवोपजायते । उपपातकदोषेण दुष्टास्ते नात्र संशयः । त्रिपुण्ड्रोद्धूलनादादौ तन्नामश्रवणेऽपि च । वांछा न जायते येषां ते महापापसंयुताः । येषां क्रोधो भवेन् भस्मधारणे तत्प्रमाणके । ते महापातकैर्युक्ताः इति मे निश्चिता मतिः । शंकरसंहितायां, शिवलिङ्गं मणिस्साक्षात् मन्त्रः पञ्चाक्षरस्तथा । भूतिरेवौषधं पुंसां मुक्तिर्ह्यावश्यकर्मणि । यत्र भुञ्जीत भस्माङ्गी मूर्खो वा पण्डितोऽपि वा । तत्र भुङ्क्तेमहादेवः सपत्नीको वृषध्वजः । यज्ञवैभवखण्डे, स्वल्पं भस्म द्विजश्रेष्ठाः बहुधा परिकीर्तितम् । श्रौतमेकं तथा स्मार्तं अपरं पण्डितोत्तमाः । श्रौतं भस्म द्विजा मुख्यं स्मार्तं गौणं प्रकीर्तितम् । अन्यच्चापि द्विजा. भस्म केवलं लौकिकं परम् । श्रौतं भस्म तथा स्मार्तं द्विजानामेव कीर्तितम् । अन्येषामपि सर्वेषामपरं भस्म लौकिकम् । सर्वाङ्गोद्धूलनेनैव तथा तिर्यक्त्रिपुण्ड्रकैः । भस्म धार्यमितिप्रोक्तं मुनिभिस्सर्वमानवैः । धारणं मन्त्रतः प्रोक्तं द्विजानां मुनिपुङ्गवाः । ललाटे धारणं विप्राः अन्येषामपि कीर्तितम् । पराशरोपपुराणे चतुर्थाध्याये । श्रौतं लिङ्गन्तु तद्विद्धि त्रिपुण्ड्रोद्धूलनात्मकम् । अश्रौतमूर्ध्वपुण्ड्रादीत्युक्त्वा । अनेकजन्मसिद्धानां श्रौतस्मार्तानुवर्तिनाम् । वेदोक्तेनैव मार्गेण त्रिपुण्ड्रोद्धूलने रतिः । भस्मना वेदमन्त्रेण त्रिपुण्ड्राद्यवकुण्ठनम् । यस्य सिद्ध्यत्प्रयत्नेन ब्राह्मण्यं तस्य पुष्कलम् । वेदवेदान्तनिष्ठानां भस्मनैवावकुण्ठनम् । सम्यक्ज्ञानप्रदं शीघ्रं सत्यमुक्तं न संशयः । भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् । महापातकसङ्घाततमसश्चण्डभास्करः । भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् । विना वेदान्तविज्ञानं जायते नैव कस्यचित् । इति पञ्चमे । ब्राह्मणेनादिभूतेन शिवेन परमात्मना । आदरेण धृतं भस्म त्रिपुण्ड्रोद्धूलनात्मना । ब्राह्मणो विधिनोत्पन्नः त्रिपुण्ड्रं भस्मनैव तु । ललाटे धारयेन्नित्यं तिर्यग्भस्मावकुण्ठनम् । ब्राह्मणानामयं धर्मो यत्त्रिपुण्ड्रस्य धारणम् । मन्त्रध्यानादिसंयुक्तं नैव वर्णा-

न्तरस्य तु । आदिब्राह्मणभूतेन त्रिपुण्ड्रं भस्मना कृतम् । यतोत एवविप्रस्तु त्रिपुण्ड्रं धारयेत्सदा । श्रौतस्मार्तसमाचारः ब्राह्मणः परमेश्वरः । महाब्राह्मणमीशानमुपगच्छेत् सदैव तु । अत्र मूलग्रन्थे भस्मच्छन्नो द्विजोविद्वान् इत्युक्त्वा भस्मस्नानरतो विप्र इत्यस्य हेतुरुक्तः । षष्ठे सर्वागमेषु निष्ठानां त्रिपुण्ड्रं भस्मकुण्ठनं । वरिष्ठं सर्वलिङ्गेभ्यः इति सत्यम्मयोदितं । तिर्यक्त्रिपुण्ड्रं सन्त्यज्य श्रौतं पुण्ड्रान्तरं भ्रमात् । ललाटे धारयेन्मर्त्यः पतत्येव न संशयः । भस्मश्रेयोर्थिभिः सर्वैः जन्मनालब्धजातिभिः । तिर्यक्त्रिपुण्ड्ररूपेण भस्मना चावकुण्ठनम् । रुद्राक्षधारणं कार्यं सर्वश्रेयोर्थिभिर्नरैरिति च । अष्टमे, उद्धूलनं त्रिपुण्ड्रञ्च येन नाचरितम्मुदा । न तस्य ब्रह्मविज्ञानं जायते जन्मकोटिभिः । उद्धूलनं त्रिपुण्ड्रं च येनैवाचरितम्मुदा । तस्यैव ब्रह्मविज्ञानं जायते ह्यचिरेण तु । तस्मात् मुमुक्षोस्सततं शान्तिदान्त्यादिभिस्सह । उद्धूलनं त्रिपुण्ड्रञ्च श्रौतन्नित्यं समाचरेत् । नवमे, त्रिपुण्ड्रधारणम्मुक्त्वा कर्माणि कुरुते तु यः । तेनैवाचरितं सर्वं व्यर्थं चानर्थकारणमिति । दशमे, भस्मना वेदसिद्धेन त्रिपुण्ड्रं भस्मकुण्ठनम् । रुद्रलिङ्गार्चनं चापि मोहतो वापि न त्यजेदिति । एकादशे, वेदसिद्धेन मन्त्रेण त्रिपुण्ड्रं भस्मकुण्ठनम् । नैव कुर्वन्ति मोहेन मनुष्याः पापकर्मिण इति । त्रयोदशे, भस्मशायी भवेन्नित्यं भस्मच्छन्नः त्रिपुण्ड्रधृक् । रुद्राध्यायी भवेन्नित्यं मासमेकमतन्द्रितः । प्रणवं वा जपेन्नित्य सदा पञ्चाक्षरं तु वा । प्रायश्चित्तं भवेदेतत् रहस्यंस्यान्न संशयः इति । चतुर्दशाध्याये, यथा विशिष्टे मानुष्ये ब्राह्मण्यं पशुविग्रहे । यज्ञदानाद्यनुष्ठानं दुर्लभं खलु देहिनाम् । तथा श्रौतेषु धर्मेषु त्रिपुण्ड्रं भस्मकुण्ठनम् । रुद्रलिङ्गार्चनं चापि दुर्लभं हि शरीरिणाम् । त्रिपुण्ड्रधारणं तिर्यक् भस्मना चावकुण्ठनम् । सुदुर्लभमिति ज्ञात्वा खलु सर्वेश्वरोकरोत् । निर्दुःखो निर्मलस्साक्षात् नित्यानन्दो निरञ्जनः । किमर्थमकरोद्ब्रूहि शिवस्साक्षान्निरामयः । अनियोज्यस्सदा कर्ता सदा भोक्ता महेश्वरः । किमर्थमकरोद्ब्रूहि साधकस्योदितम्मुने । तस्मात् सुदुर्लभं नृणामिति ज्ञात्वा महेश्वरः । त्रिपुण्ड्रधारणं भस्मकुण्ठनं चाकरोत्सदा । अनिष्पन्नस्य कर्तव्यं त्रिपुण्ड्रादेस्तु धारणम् । विशेषेण स्वलाभाय नान्यलाभाय सत्तम । स्वलाभमन्तरेणापि पराचारार्थमास्तिक । निष्पन्नेनापि कर्तव्यं यथा सर्वेश्वरेण तु । इति भस्मनो वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् । शिवस्य विष्णोर्देवानां ब्रह्मणस्तृप्तिकारणम् । भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् । पार्वत्याश्च महालक्ष्म्या भारत्याः तृप्तिकारणम् । संहितान्तरे, त्रिपुण्ड्रधारिणः पादौ प्रक्षालयति यः पुमान् । सर्वपातकयुक्तोपि सद्यः पूयते नरः । त्रिपुण्ड्रधारिणो भिक्षाप्रदानेनैव केवलम् । सर्वपातकयुक्तोपि पूयते मानवोचिरात् । सृष्टिसृष्टिच्छलेनाह त्रिपुण्ड्रस्य प्रशंसितां । ससर्ज सललाटं हि तिर्यक् नोर्ध्वं न

वर्तुलं । तिर्यक् रेखाः प्रकाशन्ते ललाटे सर्वदेहिनां । तथापि मानवा मौर्ख्यात् न कुर्वन्ति त्रिपुण्ड्रकं । वासिष्ठलैङ्गे पञ्चमाध्याये, त्रैवर्णिकानां सर्वेषामग्निहोत्रसमुद्भवं । विरजानलजं चैव धार्यं भस्म महामुने । औपासनसमुत्पन्नं गृहस्थानां विशिष्यते । समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणां । शूद्राणां श्रोत्रियागारे पचनाग्निसमुद्भवम् । अन्येषामपि सर्वेषां धार्यं दावानलोद्भवं । अग्निरित्यादिभिर्मन्त्रैः षड्भिराथर्वणैस्तथा । जाबालैस्सप्तभिर्वापि गौणेनैव तु वर्त्मना । उद्धूलयेत् स्वकं देहं पापपुञ्जभयावहं । त्रियायुषेण मन्त्रेण मेधावीत्यादिनाथवा । गौणेन भस्मना धार्यं त्रिपुण्ड्रं ब्रह्मचारिणां । त्रियंबकेन मन्त्रेण सतारेण तथैव च । पञ्चाक्षरेण मन्त्रेण प्रणवेन युतेन च । ललाटे हृदये चैव दोर्द्वन्द्वे च महामुने । त्रिपुण्ड्रं धारयेन्नित्यं गृहस्थश्च वनाश्रमी । आत्ममन्त्रेण हंसेन प्रणवेन समाहितः । त्रिपुण्ड्रं धारयेन्नित्यं संन्यासाश्रममाश्रितः । नमोन्तेन शिवेनैव शूद्रः शुश्रूषणे रतः । उद्धूलनं त्रिपुण्ड्रं च नित्यं भक्त्या समाचरेत् । अन्येषामपि मन्त्राणां विना मन्त्रेण सुव्रतं । उद्धूलनं त्रिपुण्ड्रं च कर्तव्यं भक्तिनो मुने । एवं भस्म धृतं येन तस्य पुण्यफलं शृणु । महापातकराशिश्च पातकान्यपराणिच । नश्यन्ति मुनिशार्दूल सत्यं सत्यं न चान्यथा । यतीनां ज्ञानदं प्रोक्तं वनस्थानां विरक्तिदम् । गृहस्थानाम्मुने न्यायधर्मवृद्धिकरं तथा । ब्रह्मचर्याश्रमस्थानां स्वाध्यायप्रदमेव च । शूद्राणां पुण्यदं नित्यं अन्येषां पापनाशनम् । आग्नेयं भस्मना स्नानं यतिभ्यस्तु विधीयते । आर्द्रस्नानाद्वरं भस्म त्वार्द्रेजन्तुर्वधो ध्रुवम् । कौर्मे— त्रिपुण्ड्रं ब्राह्मणो विद्वान् मनसापि न लङ्घयेत् । श्रुतौ विधीयते यस्मात् तत्यागी पतितो भवेत् । पञ्चाक्षरजपो भस्मस्नानं लिङ्गार्चनत्रयम् । कदाचिदपि न त्याज्यं यथाशक्ति समाचरेत् । द्वितीयाध्याये, सर्वेषामेव भक्तानां श्रौतं लिंगमनुत्तमम् । स तेन भस्मना कार्यं ललाटे तु त्रिपुण्ड्रकम् इति । पञ्चविंशाद्ध्याये, पुत्रलाभार्थं शंभुं तपसा तोषयितुं आगतं कृष्णं प्रत्युपपत्तिपूर्वकमुपमन्युवचनम्—तस्मादिहैव देवेशं तपस्तप्त्वा कपर्दिनम् । द्रष्टुमर्हसि विश्वेशमुग्रं भीमं महेश्वरम् । एवमुक्त्वा ददौ ज्ञानमुपमन्युर्महामुनिः । व्रतं पाशुपतं योगं कृष्णायाक्लिष्टकर्मणे । स तेन मुनिवर्येण व्याहृतो मधुसूदनः । तथैव तपसा देवो रुद्रमाराधयत्प्रभुम् । भस्मोद्धूलितसर्वाङ्गो जटी वल्कलसंयुतः । जजाप रुद्रमीशानं शिवैकाहितमानसः । गते बहुतिथे काले सोमस्सोमार्धभूषणः । अदृश्यत महादेवो व्योम्नि देव्या समाहितः इति । तत्रैव, अत्र पूर्वं हृषीकेशो विश्वात्मा देवकीसुतः । उवाच वत्सरं कृष्णः सदा पाशुपतव्रतः । भस्मोद्धूलितसर्वाङ्गो रुद्राद्ध्ययनतत्परः । आराधयन् हरिश्शंभुं कृत्वा पाशुपतव्रतमिति ।

गारुडे, भस्मदिग्धशरीराय यो ददाति धनम्मुदा । तस्य सर्वाणि पापानि विनश्यन्ति न संशयः । श्रुतयः स्मृतयः सर्वाः पुराणान्यखिलान्यपि । वदन्ति भूतिमहात्म्यं ततस्तां धारयेत् द्विजः । मानवोपपुराणे, त्रिपुण्ड्रधारणं दृष्ट्वा भूतप्रेतपुरस्सराः । भूताः प्रकंपिताश्शीघ्रं गच्छन्त्येव न संशयः । शंकरसंहितायां, कल्पानुकल्पोपकल्पभेदैर्भस्म त्रिधा मतं । भर्जनात् सर्वपापानां स्मरणाच्च पुनः पुनः । भस्म चेति समाख्यातं भुक्तिमुक्तिफलप्रदं । य इदं धारयेन्नित्यम्मन्त्रितं विधिवन्नरः । कांक्षितान्यस्य सिद्ध्यन्ति नश्यन्ति दुरितान्यपि । यथा देवस्य माहात्म्यं दुर्ज्ञेयं पार्वतीपतेः । तथैव भस्मनः प्रोक्तं वेदवेदान्तपारगैः । सत्यं ज्ञानं दया श्रद्धा वह्निः वायुः जलं स्थलं । व्योमादीनि च सर्वाणि भस्मान्येतानि वै द्विजाः । ब्रह्मविष्णुमुखैर्देवैर्ऋषिभिश्च तपोधनैः । ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च संकरैः । स्त्रीभिश्च धार्यमेतद्धि भस्मात्यन्तं शिवप्रियं । अष्टैश्वर्याणि सिद्ध्यन्ति धारणादस्य मन्त्रतः । अष्टापि सिद्धयः शंभो शक्तिः परमकारणे । सर्वं वश्यकरञ्चैतत् सर्वसौभाग्यदं परम् । भूतप्रेतपिशाचाश्च राक्षसा दुर्जनाः परे । भस्मदर्शनमात्रेण त्रस्ता धावन्ति दूरतः । तथापस्मारकुष्ठाद्या नश्यन्ति व्याधयः क्षणात् । धार्यं भस्म सदा सद्भिः त्रिपुण्ड्रोद्धूलनात्मना । उद्धूलनं त्रिपुण्ड्रं च मनसापि न लङ्घयेत् । श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत् । उद्धूलने त्रिपुण्ड्रे च तन्माहात्म्यकथासु च । येषां न जायते श्रद्धा ते महापापसंयुताः । भस्मना सजलेनैव धारयेच्च त्रिपुण्ड्रकम् । उत्तमाङ्गे ललाटे च गले वक्षसि नाभिके । उभयोः पार्श्वयोश्चैव भुजयोरुभयोस्तथा । बाहुमध्ये च करयोः पृष्ठे ककुदि भूसुराः । धृतम् पञ्चदशस्थाने त्रिपुण्ड्रं येन केन वा । स शिवः स हरि र्ब्रह्मा सवन्र्योवापि पातकी । वर्णानामाश्रमाणां च मन्त्रतोऽमन्त्रतोपिवा । त्रिपुण्ड्रोद्धूलनं प्रोक्तं जाबालैरादरेण च । उद्धूलनं त्रिपुण्ड्रं च ज्ञानाङ्गत्वेन सादरम् । आमनन्ति मुनिश्रेष्ठाः श्वेताश्वतरशाखिनः । उद्धूलनं त्रिपुण्ड्रं च सम्यगज्ञाननाशकम् । आमनन्ति मुनिश्रेष्ठाः अथर्वशिरसि स्थिताः । तथाप्यज्ञानविच्छित्तिः ज्ञानादेवतु केवलम् । अज्ञानस्य तु विज्ञानं साधकं खलु नेतरत् । येन पाशुपतं सम्यक्व्रतमाचरितं द्विजाः । तस्य ज्ञानं विजायेत घनाज्ञाननिवारकम् । उद्धूलनं त्रिपुण्ड्रञ्च मुमुक्षुस्सम्यगाचरेदिति । तत्रैवोपदेशकाण्डे दशमाद्धयाये सूतः— अथान्यद्भस्ममाहात्म्यं प्रवक्ष्यामि द्विजोत्तमाः । श्रणुद्धं सावधानेन यूयं सर्वे समाहिताः । अस्ति वङ्गाधिपः कश्चित् इति प्रस्तुत्य तं प्रति द्विजवचनम् । धार्यं भस्म त्वया राजन् त्रिपुण्ड्रोद्धूलनात्मना । अन्यथा तव दानानि निष्फलानि महान्त्यपि । अधृत्वा भस्म यत्किंचित्कृतं कर्म महीपते । निष्फलं तद्भवत्येव नात्र कार्या विचारणा । इत्युक्त्वा भस्मधारणे श्रद्धारहितं

भुजवलनामकं राजानं प्रति पुनः सुशीलनामकद्विजवचनं । यस्य भस्मनि भूपाल-युद्धिस्तद्धारणेपि वा । न जायतेस्य पापस्य लक्ष्मीर्नश्यति च क्षणात् । दारिद्र्यं च भवेत्तस्य जायन्ते व्याधयस्तथा । न्यूनान्यङ्गानि पापस्य भवेयुर्नात्र संशयः । पुत्रादयोस्य नश्यन्ति नरकश्च भवेदिति । तस्माद्धार्यं नरश्रेष्ठकर्मादौ भस्म पावनं । इत्युक्तोपि स राजा तु न भस्म धृतवान् तदा । अनन्तरं तस्य राज्यभ्रंशपुत्रादिनाशस्त्रीवियोगकर-पादकर्तनव्याध्याविष्टत्वादिकं चाभूत् । अनन्तरं सुशीलः एतस्य राज्ञः भस्म दत्वा पूर्व-वत् सर्वं राज्यादिकं संपादितवान् इत्यस्मिन्नेवाध्याये प्रसिद्धं । तत्रैव द्वादशाध्याये । ब्रह्मविष्णुशापयुक्तौ पुरोहितौ प्रति राज्ञा प्रार्थितो दधीचिः—इति राज्ञो वचः श्रुत्वा ऋषिः परमया मुदा । भस्मादाय ददौ पूतं भर्जकं पापसन्ततेः । तदादाय नृपश्रेष्ठो लेपयामास विप्रयोः । तदानीं ववृधे तस्य विशुद्धवपुषस्तरां । सुधर्मस्यापि रसना सम-जायत पूर्ववत् । तदेतदद्भुतं दृष्ट्वा सर्वेप्याश्चर्यमाययुः । भस्मावलेपनाच्छापात् मुक्तावेतौ द्विजावुभौ । ब्रह्मविष्ण्वोरतो भस्म महिमा केन गण्यते । वज्रदेही महीपालः तदाश्चर्य-समन्वितः । दधीचिं तपतां श्रेष्ठं प्रणनाम महीतले । तावुभौ भ्रातरौ विप्रौ प्रणम्य ऋषिसत्तमं । भवता रक्षितावावां माहात्म्यात् भस्मनो मुने । ज्ञायते भवता भस्म महिमा शंकरेण वा । इत्युक्त्वा दण्डवत् भूमौ नमन्तौ तं च भूमिपं । आशिर्भिर्योज-यित्वामुं स्वाश्रमं प्रययौ मुनिरिति । बृहन्नारदीये, शिवप्रियाश्शिवासक्ताः शिवपादार्चने रताः । त्रिपुण्ड्रधारिणो ये च ते वै भागवतोत्तमाः । शिवधर्मे, सितेन भस्मना कुर्यात् त्रिसन्ध्यं यस्त्रिपुण्ड्रकम् । सर्वपापविनिर्मुक्तः शिवलोके महीयते । रुद्राग्नेर्यत्परं वीर्यं तद्भस्म परिकीर्तितम् । ध्वंसनं सर्वदुःखानां सर्वपापविशोधनम् । योगी सर्वाङ्गकस्नानं आपादतलमस्तकम् । त्रिसन्ध्यमाचरेन्नित्यं स वै योगमवाप्नुयात् । यः स्नानमाचरेन्नित्य-माग्नेय संयतेन्द्रियः । कुलैकविंशमुत्तार्य स गच्छेत् परमाङ्गतिम् । भस्मस्नानं जलस्नानात् असङ्ख्येयगुणान्वितं । तस्माद्वारुणमुत्सृज्य स्नानमाग्नेयमाचरेत् । सर्वतीर्थेषु यत् पुण्यं सर्वतीर्थेषु यत् फलं । तत् फलं लभते सर्वं भस्मस्नानात न संशयः । महापातकयुक्तो वा युक्तो वाप्युपपातकैः । भस्मस्नानेन तत्सर्वं दहत्यग्निरिवेन्धनं । मानवीयसंहितायां, प्रातःकाले च मध्याह्ने सायाह्ने वा त्रिपुण्ड्रकं । सितेन भस्मना कुर्यात् स रुद्रो नात्र संशयः । वायवीये, भस्मछन्नो द्विजो विद्वान् महापातकसंभवैः । दोषै-र्विमुच्यते सद्यो मुच्यते नात्र संशयः । तस्मात्सर्वेषु लोकेषु वीर्यवान् भस्म संयुतः । रुद्राग्नेर्यत् परं वीर्यं तद्भस्म परिकीर्तितं । भस्मनिष्ठस्य दह्यन्ते दोषा भस्माग्निसङ्गमात् । भस्मस्नानविशुद्धात्मा भस्मनिष्ठ इति स्मृतः । भूतप्रेतपिशाचाद्याः रोगाश्चातीव दुःसहाः ।

भस्मनिष्ठस्य सान्निध्यात् विद्रवन्ति न संशयः । लैङ्गे, मानस्तोकेति मन्त्रेण ललाटादिषु पञ्चसु । स्थानेषु मध्यमानामिकाङ्गुष्ठाङ्गुलिभिः लिखेत् । अङ्गुष्ठं मध्यतः कृत्वा सृष्टिसंहारयोर्बुधः । एवं विधि विभूत्यैव कुरुते यस्त्रिपुण्ड्रकं । स रुद्रकर्मकर्ता हि त्रयीमय इति श्रुतिः । स्मरणादेव रुद्रस्य यथा पापं प्रणश्यति । तथास्य धारणादेव सर्वं पापं प्रणश्यति । यद्यकार्यसहस्राणि कृत्वा यः स्नाति भस्मना । तत्सर्वं दहते भस्म यथाग्निस्तेजसा वनम् । कृत्वा हि चातुलं पापं मृत्युकालेपि यो द्विजः । भस्मस्नायी भवेत् किञ्चित् क्षिप्रं पापैः प्रमुच्यते । भस्मस्नानाद्विशुद्धात्मा जितक्रोधो जितेन्द्रियः । मत्समीपं समागम्य न भूयोपि निवर्तते इति । लैङ्ग एवान्यत्र । भस्मस्नानं पुनः कुर्यात् विधिवत् देहशुद्धये । शोध्यभस्म यथान्यायं प्रणवेनाग्निहोत्रजम् । ईशानेन शिरोदेशं मुखं तत्पुरुषेण तु । उरोदेशमघोरेण गुह्यं वामेन सुव्रताः । सद्येन पादौ सर्वाङ्गं प्रणवेनाभिषिंचयेत् । भस्मस्नानपरो विप्रो भस्मशायी जितेन्द्रियः । सर्वपापविनिर्मुक्तः शिवसायुज्यमाप्नुयात् । मात्स्ये । किं यज्ञैः किमनेकतीर्थगमनैः किंवेदपाठश्रमैः किंघोरैः विविधैः तपोभिरमलैः किंमन्त्रतन्त्रैर्जपैः । किंध्यानैः किमनेकदाननिकरैः किं सांख्ययोगश्रमैः मोक्षार्थी सितभस्मना च निपुणं कुर्यात् त्रिपुण्ड्रं बुध इति । सौरसंहितायां प्रथमाध्याये । भस्मनोद्धूलनं तिर्यक् त्रिपुण्ड्रं शिवपूजनम् । प्राधान्येन पुराणानि प्रवदन्ति हि सादरमिति । अत्याश्रमसमाख्यं व्रतं पाशुपतं परम् । वेदान्तेषु समस्तेषु तत्सारतरमुत्तमम् । ब्राह्मणस्य विशेषेण धर्मोयमपरस्य च । भूत्यैवोद्धूलनं यच्च त्रिपुण्ड्रस्यैव धारणमिति च । तृतीये रुद्रलोकं प्रस्तुत्य । तत्रैव देवदेवेशं शङ्करं शशिशेखरम् । प्रणवाद्यभिमानिन्यो देवताः पर्युपासते । प्रणवः सर्वमन्त्राणामाधारः परमात्मनः । वाचको जटिलः शुद्धो भस्मोद्धूलितविग्रहः । केयूरकटकोपेत पुण्ड्रत्रयविराजितः । व्याहृतिः परमा देवी विशेषेण विमुक्तिदा । त्रिपुण्ड्रावलिभिर्दीप्ता भस्मनैवावकुण्ठिता । सावित्री च महाभागा कुण्डलद्वयशोभिता । प्रसन्नवदना दिव्या जटाजूटधरा शुभा । भस्मदिग्धशरीरा च पुण्ड्रत्रयविराजिता । अन्याश्च वैदिका मन्त्राः सकला बहुकामदाः । भस्मसञ्छन्नसर्वाङ्गाः त्रिपुण्ड्राङ्कितमस्तकाः । रुद्राक्षमालाभरणाः जटाजूटधरा मुदा इति । पञ्चमे, अथायत्नेन पापानां समस्तानां समासतः । शुद्धिहेतुं प्रवक्ष्यामि तवाहं करुणाबलात् । वर्णाश्रमपरिभ्रष्टः श्रुत्युक्तेनैववर्त्मना । त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः । अग्निकर्मपरित्यागी श्राद्धकर्मविवर्जितः । त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः । परदाराभिगामीच परद्रोही परार्थहृत् । त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः । पाषण्डी पिशुनः कुष्ठी कलत्रस्यापराधकृत् । त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः । भस्मसंच्छन्नदेहाय प्रणामं कुरुते तु यः ।

त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः । तैलतांबूलपिण्याक गव्यारामाद्दविक्रयी ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः । ब्रह्मविष्णुशिवादीनां देवानामपि दूषकः ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः । मर्यादाभेदकस्तीर्थदूषकः कुण्डकाशनः ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः । भस्मधारणहीनश्च त्रिपुण्ड्रोद्धूलनात्मना ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः । ऊर्ध्वपुण्ड्रांकुशाश्वत्थपत्रवर्तुललिङ्गधृक् ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः । अङ्कितः शङ्खचक्राद्यैः शरीरे देवतायुधैः ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः । ब्रह्महा मद्यपः स्तेनः तथैव गुरुतल्पगः । त्रिपुण्ड्र-
धारणादेव भस्मना पूयते नरः । त्रिपुण्ड्रधारिणे भिक्षाप्रदानेनैव केवलम् । सर्वपातक-
युक्तोऽपि पूयते मानवोऽचिरात् । रुद्रलिङ्गार्चनं भक्त्या कुरुते वेदवर्त्मना । सर्व
पातकयुक्तोऽपि पूयते मानवोऽचिरात् । भस्मसंछन्नसर्वाङ्गमनुगच्छति यः पुमान् ।
सर्वपातकयुक्तोऽपि पूयते मानवोऽचिरात् । भस्मसंछन्नसर्वाङ्गः प्रस्तौति श्रद्धया सह
सर्वपातकयुक्तोऽपि पूयते मानवोऽचिरात् । भस्मसंछन्नदेहाय प्रणामं कुरुते तु यः ।
सर्वपातकयुक्तोऽपि पूयते मानवोऽचिरात् । दशमे, अथातस्संप्रवक्ष्यामि तवाहं करुणा-
बलात् । ज्ञानोपायं समासेन वेदेनैव प्रदर्शितम् । शान्तिर्दान्तिश्च संन्यासः परहंससमा-
ह्वयः । द्वन्द्वादीनां सहिष्णुत्वं ऐकाग्र्यं भस्मकुण्ठनम् । त्रिपुण्ड्रधारणं तिर्यक्श्रद्धा-
रुद्रस्य पूजनमित्यादीनि पञ्चदशाध्याये सर्वशाखासु वस्त्वेकं शिवाख्यं सत्यचिद्घनम् ।
तथा तद्विषयं ज्ञानं तथैव च शिरोव्रतम् । सर्वशाखाश्रुतं तत्वं विज्ञातुं प्रयतेत
यः । आचरेत्सविशेषेण नित्यं प्रीत्या शिरोव्रतम् । शिरोव्रतविहीनस्तु सर्वधर्म-
समन्वितः । अपि ब्रह्मात्मविद्यायां नाधिकारी न संशयः । शिरोव्रतमिदं सर्वपापकान्तार-
दाहकम् । साधनं शुद्धविद्यायास्ततस्तत्सम्यगाचरेत् । श्रुतिराथर्वणी सूक्ष्मा सु-
सूक्ष्मार्थप्रकाशिका । यदुवाच व्रतं प्रीत्या तन्नित्यं सम्यगाचरेत् । अग्निरित्यादिभिर्मन्त्रैः
षड्भिः शुद्धेन भस्मना । सर्वाङ्गोद्धूलनं कुर्यात् शिरोव्रतसमाह्वयम् । एतच्छिरोव्रतं
कुर्यात् सन्ध्याकालेषु सादरम् । यावद्विद्योदयं तावत् तस्यविद्या खलूत्तमा इति । भविष्य-
त्पुराणे । यः स्नानमाचरेन्नित्यं आग्नेयं संयतेन्द्रियः । कुलैकविंशमुत्तार्य स गच्छेत्परमां
गतिम् । महापातकयुक्तो वा युक्तो वा सर्वपातकैः । भस्मस्नाननिषेवेण मुच्यते सर्व-
पातकैः इति । यद्यपि धर्मज्ञसमयः प्रमाणं वेदाश्चेत्यापस्तम्बीये, वेदोधर्ममूलं स्मृति-
शीले इति गौतमीये, वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदामिति
याज्ञवल्कीये, तथापि पूर्वमीमांसाधर्मशास्त्रादिरीत्या एतत् । उत्तरमीमांसारीत्या
तु वेदाविरुद्धं सर्वं प्रमाणं । अत एवोक्तं भगवद्भिः भाष्यकारैः । पाञ्चरात्रा-

धिकरणे– अभिगमनोपादानेज्याखद्ध्यायप्रणिधानादीनां आगमविहितानामपि वेदाविरुद्धानां धर्मत्वमिति आगमाः प्रदर्श्यन्ते । कालोत्तरे तस्मादेतत् शिवस्नानमाग्नेयं यः समाचरेत् । भवपाशैश्च निर्मुक्तः शिवलोके महीयते । ज्वररक्षः पिशाचाश्चाप्यसुरा यातुधानकाः । कुमारग्रहभूताश्च कूष्माण्डा डाकिनीगणाः । ब्रह्मराक्षसमुख्याश्च पूतनाकुष्ठगुल्मकाः । भगन्दराणि सर्वाणि ह्यशीतिर्वातरोगकाः । चतुष्षष्टिः पित्तरोगाः श्लेष्मसप्तत्रिपञ्चिका । व्यग्रसर्वभयं चैवाप्यन्ये दुष्टग्रहा अपि । भस्मस्नानेन नश्यन्ति सिंहेनेव गजा यथा इति सुप्रभेदे । नमस्कृत्वा महादेवं देवी वचनमब्रवीत् । भस्मस्नानं कथं देव तत्सम्यग्वद मे प्रभो । ईश्वरः । अथातः संप्रवक्ष्यामि भस्मस्नानं सुलोचने । आयुष्यं बलमारोग्यं श्रीः पुष्टिः वर्धते यथा । रक्षार्थं मङ्गलार्थं च सर्वसंपत् समृद्धये । भस्मादिग्धमनुष्याणां ज्वरामय भवाय च । शान्तिकं पौष्टिकं भस्म कामदं च त्रिधा भवेत् । गोमयं योनिसंबद्धं यद्धस्तेनैव गृह्यते । ब्रह्ममन्त्रैश्च संदग्धः तच्छान्तिकमिहोच्यते । सावधानः सुगोयोनिनिस्सृतं यो मयं तु यत् । अन्तरिक्षे गृहीत्वा तत् षडङ्गेन दहेत्ततः । पौष्टिकं तत्समाख्यातं कामदन्तु ततः शृणु । सुशुद्धे भूतले दैवात् पतितं गोमयं तु यत् । प्रासादेनिदहेदेतत् एतत्कमुकमुच्यते । प्रातरुत्थाय देवेशि मौनव्रतधरश्शुचिः । गवां गोष्ठे च गत्वा तु नमस्कृत्य च गोकुलम् । गवां वर्णानुरूपाणां गृह्णीयात् गोमयं शुभम् । ब्राह्मणस्य तु गौः श्वेता रक्ता गौः क्षत्रियस्य तु । पीतवर्णा तु वैश्यस्य कृष्णा शूद्रस्य तूच्यते । पौर्णमायाममायां अमायांवा अष्टम्यां वा विशुद्धधीः । प्रासादेन तु मन्त्रेण गृहीत्वा गोमयं शुभम् । हृदयेन तु मन्त्रेण पिण्डं कृत्वा तु गोमयम् । रविरश्मिषु संतप्तं शुचौ देशे मनोहरे । तुषेण वा बुसैर्वापि प्रसादेन तु निक्षिपेत् । अरण्युद्भवमग्निवा शिवाग्निं वापि कारयेत् । अग्निश्च विन्यसेत्तत्र शिवबीजेन मन्त्रतः । संग्रहेदथतच्चाग्निकुण्डाद्भस्म विचक्षणः । नवपात्रं समादाय प्रसादेन तु निक्षिपेत् । केतकीं पाटलीं तद्वत् उशीरं चन्दनं तथा । निक्षिपेत्तस्य मध्ये तु सद्यो मन्त्रेण शुद्धधीः । जलस्नानं पुरः कृत्वा भस्मस्नानमतः परम् । जलस्नाने त्वशक्तश्चेद्भस्मस्नानं समाचरेत् । प्रक्षाल्य पादौ हस्तौ चाप्याचम्य पुनराचमेत् । भस्म वामकरे स्थाप्य दक्षिणेनाभिमन्त्रयेत् । सद्याभिमन्त्रैस्तैरेव भस्मनोद्धूलनं चरेत् । ईशानेन शिरोदेशं मुखं तत्पुरुषेण तु । ऊरुदेशमघोरेण नाभिं वामेन तत्परम् । सद्योमन्त्रेणसर्वाङ्गं समुद्धूल्य विचक्षणः । पूर्ववस्त्रं परित्यज्य शुद्धवस्त्रं परिग्रहेत् । प्रक्षाल्य पादौ हस्तौ च पश्चादाचमनं चरेत् । भस्मनोद्धूलनाभावे त्रिपुण्ड्रं तु विधीयते । मध्याह्नात्प्राक्जलैर्युक्तं परतो जलवर्जितम् । तर्जिन्यनामिकामध्यैः त्रिपुण्डं तु समाचरेत् । मूर्धांचैव ललाटं च कर्णौ कण्ठस्तथैव च । हृदयश्चैव

बाहू च नाभिस्थानं तथैव च । पञ्चाङ्गुलैर्न्यसेन्मूर्ध्निप्रासादेन तु मन्त्रतः । त्र्यङ्गुलैर्विन्यसेत् फाले शिरोमन्त्रेण देशिकः । सद्येन दक्षिणे कर्णे वामदेवेन वामतः । अघोरेण तु कण्ठेच मध्यांगुल्या स्पृशेद् बुधः । हृदयं हृदयेनैव त्रिभिरङ्गुलिभिः स्पृशेत् । विन्यसेत् दक्षिणे बाहौ शिखामन्त्रेण देशिकः । वामबाहौ न्यसेद् धीमान् कवचेन त्र्यङ्गुलैः, मद्ध्येन संस्पृशेत् नाभिं ईशानाभिधमन्त्रतः । ब्रह्मविष्णुमहेशानास्तिस्रो रेखा इति स्मृताः। अधोब्रह्मा ततोविष्णुः तत ऊर्ध्वं महेश्वरः । एकाङ्गुलेन न्यस्तं यदीश्वरस्तत्र देवता । शिरोमध्ये स्वयं ब्रह्मा ईश्वरस्तु ललाटके । कर्णयोरश्विनौ देवौ गणेशस्तु गले तथा । हृदि चण्डेश्वरः प्रोक्तो बाह्वोर्वासुकितक्षकौ । नाभौ प्रजापतिश्चैवं भावयेदधिदैवतम् । ब्राह्मणस्तु समुद्धृत्य त्रिपुण्ड्रं धारयेत्ततः । क्षत्रियश्च तथा वैश्यः शूद्रश्चोद्धूलनं त्यजेत् सर्वेषामन्त्यजातीनां मन्त्रेण रहितं भवेत् । अदीक्षितमनुष्याणामपि मन्त्रंविना भवेत् । इति । सिद्धान्तशेखरे कल्पानुकल्पउपकल्पाकल्पभेदेन भस्मनश्चातुर्विध्यमभिधायोक्तं, मूलेन शोधितं भस्म कल्पाख्यं परिकीर्तितम् । अग्निहोत्रसमुद्भूतमथवा भस्मकल्पकमिति । शङ्करसंहितायां उपदेशकाण्डे द्वादशाध्याये वज्रदेहीति कथन राजा ब्रह्मविष्णुशापवशात् मूकतांक्षयञ्च प्राप्तौ स्वपुरोहितौ सुधर्मविशुद्धनामानौ गृहीत्वा केदारेश्वरसेवार्थमागतवान् तत्र केदारेश्वरदर्शनार्थमागतं दधीचिं दृष्ट्वा उभयोः ब्रह्मविष्णुशापान्मोचनं प्रार्थयामास । स ऋषिर्भस्मादाय ददौ । तदादाय लेपयामास विप्रयोर्देहं । तदानीमेव राजा भस्ममहिम्ना विशुद्धस्य देहो ववृधे । सुधर्मस्यापि रसना समजायत । इत्येवं कथां नारदमुखात् श्रुत्वा देवेन्द्रागस्त्यौ विस्मयवन्तौ स्थितौ । तदानीं वरुण आगत्य तिष्ठत्वयं भस्मकथालापः समुद्रे तिरोहितासुरनिग्रहः कार्य इति वरुणेनोक्ते भस्मकथाक्षेपस्त्वयाकृत इति अगस्त्येन शप्तः । हे वरुण त्वं राक्षसो भवेति अनन्तरमिन्द्रमाहूय समुद्रतीरमासाद्य भस्मालेपमहिम्नांबुधिं पपौ । अनन्तरञ्च इन्द्रस्यापि भस्म दत्वा भस्ममहिम्ना समुद्राश्रयान् तिरोहितान् राक्षसान् इन्द्रेण नाशं कारयामास । तदनन्तरं इन्द्रेण वरुणस्य राक्षसभावं प्रति मोचनं प्रार्थितस्सचाह—भविष्यति महीपाल कश्चित् भुजबलाह्वयः । दृष्ट्वास्य भस्म निटिले रक्षोवपुरिदं द्रुतम् । त्यक्ष्यत्ययं शरीरं स्वं समेष्यति यथा पुरा । पश्चिमाशामनुप्राप्य पालयिष्यति च ध्रुवम् । इत्युक्त्वा प्रययौ शीघ्रं स्वाश्रमं प्रति तापसः । तथैवाहं समागत्य न्यवसत् पत्तने स्वके । रक्षोवपुरनुप्राप्य घोरमत्यन्तगर्हितम् । दृष्ट्वा त्वन्निटिलेभस्मप्राप्तवान् मामकं वपुः। इत्युक्त्वा स भटानाशु सस्मार वरुणस्तदा । तदानीमागतास्सर्वे भटास्तस्यापि ते ध्रुवम् । तैरयं स्वांदिशं श्रुत्वा चारवप्राप पश्चिमां तुष्टमानसः । स्वपदं प्राप तरसा भस्मसन्दर्शनाद्द्विजाः । श्रुत्वा चारव-

मस्याशु राजा भुजबलस्तदा । अत्यन्ताश्चर्यसंयुक्तो भस्मन्यासक्तमानसः । भस्मावलिप्तसर्वाङ्गः भस्मशय्यारतस्तथा । पुत्रमित्रकलत्रैश्च भुक्त्वा भोगान्यथेप्सितान् । कैलासं प्रापदेहान्ते मुदा परमया द्विजाः । य एतद्भस्ममाहात्म्यं शृणुयात्सावधानतः । श्रावयेद्वा पठेद्वापि स याति परमां गतिम् । पुत्रकामो लभेत्पुत्रं धनकामो लभेद्धनम् । विद्याकामः परां विद्यां मोक्षार्थी मोक्षमाप्नुयात् । स्वर्णस्तेयसुरापानब्रह्महत्यादिपातकैः । मुच्यते नात्र सन्देहो नियमाच्छ्रवणाद्द्विजा इति । ब्रह्मविद्याप्रियसखी भूतिमण्डनमालिका । रचिता प्रियतां शंभुः अनया भूतिभूषणः ॥ ३१ ॥

उक्तरीत्या भस्ममाहात्म्यमुपवर्ण्य भस्मधारणाद्यनुष्ठानार्थं श्रीरामंप्रति उपलालनपूर्वकमाह ।

एवं कुरु महाभाग शिवनामसहस्रकम् ।
इदं गुह्यं प्रदास्यामि तेन सर्वार्थमाप्स्यसि ॥ ३२ ॥

न केवलं विभूतिधारणमात्रं । किन्तु शिवनामसाहस्रकजपोऽपि कर्तव्यः । तदर्थं शिवनामसहस्रमपि उपदिशामीत्याह इदमिति । गुह्यं गोपनीयं तस्यप्रयोजनमाह तेनेति । तेन विभूतिधारणपूर्वकसहस्रनामजपफलेनाभिमुखीकृत्य सहस्रनामादरयुक्तं रामं प्रति उपदेशं कृतवानित्याह ॥ ३२ ॥

इत्युक्त्वा प्रददौ तस्मै शिवनामसहस्रकम् ।
वेदसारमयं नित्यं शिवप्रत्यक्षकारकम् ॥ ३३ ॥

तस्य गुह्यत्वे हेतुमाह वेदसारमयमिति । वेदसारो वेदान्तः तन्मयः तदात्मकः प्रायेण वेदान्तेष्वेव विद्यमानानि नामानि तदर्थगर्भितानि वा तएवं नित्यं फलाव्यभिचारि तदेवाह शिवप्रत्यक्षकारकमिति । अतएवेदानींतनानामपि वेदसारसहस्रनामानुसन्धाने ब्रह्मसाक्षात्कारो भवतीति सूचितम् । शिष्येण उपेक्षणीय इति न्यायेन उपदिष्टनामसहस्रस्यानुष्ठानप्रकारं इतिकर्तव्यताञ्च आह अर्धेन ॥ ३३ ॥

उक्तं च तेन रामत्वं जपन्नास्व दिवानिशम् ॥

तेन अगस्त्येन सर्वार्थमाप्स्यसीत्युक्तं तदेव प्रयोजनमभिव्यनक्ति श्लोकद्वयेन—

ततः प्रसन्नो भगवान् महापाशुपतास्त्रकम् ।
तुभ्यं दास्यति तेन त्वं शत्रून् हन्त्वाप्स्यसि प्रियाम् ॥ ३४ ॥
तस्यैवास्त्रस्य माहात्म्यात् समुद्रं शोषयिष्यति ।

संहारकं च जगतामस्त्रं तत्पार्वतीपते ॥ ३५ ॥

ननु, मध्येसमुद्रयानीता सीता दैत्येन मायिना । चतुरङ्गबलं यस्य वर्तते कोटि-संख्यया । इत्यादिना रावणजयो दुर्लभ इत्युक्तं । तां शङ्कां परिहरति तस्यैवास्त्रस्य इति । पाशुपतास्त्रलाभे रावणजयईषत्कर इत्युक्त्वा तदलाभे सुदुर्लभ इति व्यतिरेक-मुखेनाप्याहार्धेन ॥

तदलाभे दानवानां जयस्तव सुदुर्लभः ।

उक्तमेवार्थमुपसंहरति अर्धेन ॥

तस्माल्लब्धुं तदेवास्त्रं शरणं याहि शङ्करम् ॥ ३६ ॥

तस्मात् महापाशुपतास्त्रस्य इष्टसिद्धिकरत्वात् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य अभिनवनारायणेन्द्रसरस्वतीपूज्यपादशिष्य श्रीमत्परमशिवेन्द्रविरचित शिवगीताव्याख्याने तात्पर्यप्रकाशिकाख्याने

तृतीयोऽध्यायः ॥



